नत्वनंगदंसारणंचदुर्मदंविपुलश्रवम् वसुदेवस्तुरोहिण्यांकृतादीनुदपादयदिति रोहिण्यास्तनयोरामःप्रोक्तः वसुदेवस्तुदेवक्यामष्टपुत्रानजीजनत् कीर्तिमंतं-
सुषेणंचभद्रसेनमुदारधीः मृदुंसंमर्दनंभद्रंसंकर्षणमहीश्वरम् अष्टमस्तुतयोरासीत्स्वयमेवहरिःकिलेति पुनर्देवक्यागर्भसंबंधस्तस्यैवोक्तः सकुतोघटनइत्या
क्षेपः ८ कस्मादिति भगवतःकंसभयशंकायाअसंभवादित्यर्थः ९ मातुर्भ्रातरंकंसंतस्माद्वधानर्हम् अद्धासाक्षात् कस्मादवधीत् १० ११ १२ ननुक्षु-
त्तृड्भ्यांपीडितस्यतवकुतः श्रवणावकाशस्तत्राह नैषेति त्यक्तोदकस्यापिममजीवनंहरिकथामृतपाननिमित्तम् तदुपरमेसद्यएवजीवितंनस्यादित्यर्थः १३ एतं

रोहिण्यास्तनयःप्रोक्तोरामःसंकर्षणस्त्वया देवक्यागर्भसंबंधःकुतोदेहांतरंविना ८ कस्मान्मुकुंदोभगवान्पितुर्गेहाद्व्रजंगतः क्ववासंज्ञा
तिभिःसार्द्धंकृतवान्सात्वतांपतिः ९ व्रजेवसन्किमकरोन्मधुपुर्यांचकेशवः भ्रातरंचावधीत्कंसंमातुरद्धातदर्हणम् १० देहंमानुषमाश्रि
त्यकतिवर्षाणिवृष्णिभिः यदुपुर्यांसहावात्सीत्पत्न्यःकत्यभवन्प्रभोः ११ एतदन्यच्चसर्वंमेमुनेकृष्णविचेष्टितम् वक्तुमर्हसिसर्वज्ञश्र
द्दधानायविस्तृतम् १२ नैषातिदुःसहाक्षुन्मांत्यक्तोदमपिबाधते पिबंतंत्वन्मुखांभोजच्युतंहरिकथामृतम् १३ सूतउवाच एतन्निश
म्यभृगुनंदनसाधुवादंवैयासकिःसभगवानथविष्णुरातम् प्रत्यर्च्यकृष्णचरितंकलिकल्मषघ्नंव्याहर्तुमारभतभागवतप्रधानः १४ ॥
॥ श्रीशुकउवाच ॥ सम्यग्व्यवसिताबुद्धिस्तवराजर्षिसत्तम वासुदेवकथायांतेयज्जातानैष्ठिकीमतिः १५ वासुदेवकथाप्र-
श्नःपुरुषांस्त्रीन्पुनातिहि वक्तारंपृच्छकंश्रोतॄंस्तत्पादसलिलंयथा १६ भूमिर्दृप्तनृपव्याजदैत्यानीकशतायुतैः आक्रांताभूरिभारेण
ब्रह्माणंशरणंययौ १७ गौर्भूत्वाऽश्रुमुखीखिन्नाक्रंदंतीकरुणंविभोः उपस्थितांऽतिकेतस्मैव्यसनंस्वमवोचत १८ ब्रह्मातदुपधा
र्यसहदेवैस्तयासह जगामसत्रिनयनस्तीरंक्षीरपयोनिधेः १९ तत्रगत्वाजगन्नाथंदेवदेवंवृषाकपिम् पुरुषंपुरुषसूक्तेनउपतस्थे
समाहितः २० गिरंसमाधौगगनेसमीरितांनिशम्यवेधास्त्रिदशानुवाचह गांपौरुषींमेशृणुतामराःपुनर्विधीयतामाशुतथैवमाचिर-
म् २१ पुरैवपुंसावधृतोधराज्वरोभवद्भिरंशैर्यदुषूपजन्यताम् सयावदुर्व्याभरमीश्वरेश्वरःस्वकालशक्त्याक्षपयंश्चरेद्भुवि २२ व
सुदेवगृहेसाक्षाद्भगवान्पुरुषःपरः जनिष्यतेतत्प्रियार्थंसंभवंतुसुरस्त्रियः २३ वासुदेवकलानंतःसहस्रवदनःस्वराट् अग्र
तोभवितादेवोहरेःप्रियचिकीर्षया २४ विष्णोर्मायाभगवतीययासंमोहितंजगत् आदिष्टाप्रभुणांशेनकार्यार्थेसंभविष्यति २५

साधुवादंसमीचीनंप्रश्नम् भागवतप्रधानोभागवतेषुश्रेष्ठः १४ व्यवसिताकृतनिश्चया यतस्ततोबुद्धेः १५ १६ तत्रतावत्प्रथमंभगवदवतारकारणमाह भू-
मिरित्यादिनवभिः श्लोकैः दृप्तनृपव्याजायेदैत्यास्तेषामनीकशतानामयुतैर्योभूरिभारस्तेनाक्रांता १७ विभोरंतिकेउपस्थितासती १८ १९ २०
पौरुषींपुरुषस्यभगवतइयंपौरुषीतांगांवाचंमेमत्तः आशुशृणुत माचिरमविलंबितंतथैवविधीयतांचेति २१ विज्ञापनात्पुरैवपुंसाईश्वरेणा ज्वरस्तापः
अवधृतोऽवधारितः २२ २३ २४ देवकीगर्भसंकर्षणयशोदामोहनादिकार्यार्थेयशोदायांसंभविष्यति २५ ७ ७ ७ ७

२६ भगवदवतारागारे अवतारप्रस्तावनकथामाह शूरसेनइत्यादिनायावत्समाप्ति मथुरामावसन् मथुरायान्वरान् विषयान्देशान् २७ २८ सूर्ययानवोढ-
या प्रयाणेप्रस्थानार्थम् २९ रश्मीन्प्रग्रहान् ३० पारिबर्हमुपस्करम् ३१ ३२ ३३ आभाष्यैरकम्मात्संबोध्य हन्ताहनिष्यति ३४ कुलपांसन कुलदूषण प्र
ग्रहः प्रवृत्तः कचेकेशानथे ३५ नृशंसंक्रूरम् महाभागइति अपपाठः स्वजनमनिरूपणदेवैरानकदुन्दुभिनामधारणाद्भाविभगवदवतारेणशक्यप्रभर्त्ताकारत्वात्सभग-
नीतिसान्त्वयन्स्तुत्याशास्त्रविषयत्तनापपत्तिभिश्चसाममार्गेणप्रबोधयन् ३६ ३७ मरणभयेनहन्मीतिचेत्तत्रापिमरणस्यापरिहरणीयत्वाद्देहान्तरस्यावश्य
भावित्वात्तत्रापिभगवन्माग्न्यादीनामविशेषात्त्वयेनपापाचरणमयुक्तमित्यभिप्रेत्याह मृत्युर्जन्मवतामित्यादिदेहेनसहेतितिथिकालादेहाविनत्वादिति न

श्रीशुकउवाच इत्यादिश्यामरगणान्प्रजापतिपतिर्विभुः आश्वास्यचमहींगीर्भिः स्वधामपरमंययौ २६ शूरसेनोयदुपतिर्मथुरामा
वसन्पुरीम् माथुरान्शूरसेनांश्चविषयान्बुभुजेपुरा २७ राजधानीततः साभूत्सर्वयादवभूभुजाम् मथुराभगवान्यत्रनित्यंसंनि
हितोहरिः २८ तस्यांतुकर्हिचिच्छौरिर्वसुदेवःकृतोद्वहः देवक्यासूर्ययासार्द्धंप्रयाणेरथमारुहत् २९ उग्रसेनसुतःकंसःस्वसुः
प्रियचिकीर्षया रश्मीन्हयानांजग्राहरौक्मैरथशतैर्वृतः ३० चतुःशतंपारिबर्हंगजानांहेममालिनाम् अश्वानामयुतंसार्द्धंरथाना
ञ्चत्रिषट्शतम् ३१ दासीनांसुकुमारीणांद्वेशतेसमलङ्कृते दुहित्रेदेवकःप्रादाद्यानेदुहितृवत्सलः ३२ शङ्खतूर्यमृदङ्गाश्चनेदुर्दुन्दु
भयःसमम् प्रयाणप्रक्रमेतावद्वरवध्वोःसुमङ्गलम् ३३ पथिप्रग्रहिणंकंसमाभाष्याहाशरीरवाक् अस्यास्त्वामष्टमोगर्भोहन्तायां
वहसेऽबुध ३४ इत्युक्तःसखलःपापोभोजानांकुलपांसनः भगिनींहन्तुमारब्धःखड्गपाणिःकचेऽग्रहीत् ३५ तंजुगुप्सितकर्माणंनृ-
शंसंनिरपत्रपम् वसुदेवोमहाभागउवाचपरिसान्त्वयन् ३६ वसुदेवउवाच श्लाघनीयगुणःशूरैर्भवान्भोजयशस्करः सकथं-
भगिनींहन्यात्स्त्रियमुद्वाहपर्वणि ३७ मृत्युर्जन्मवतांवीरदेहेनसहजायते अद्यवाब्दशतान्तेवामृत्युर्वैप्राणिनांध्रुवः ३८ देहेप
ञ्चत्वमापन्नेदेहीकर्मानुगोऽवशः देहान्तरमनुप्राप्यप्राक्तनंत्यजतेवपुः ३९ व्रजंस्तिष्ठन्पदैकेनयथैवैकेनगच्छति यथातृणजलौ
कैवंदेहीकर्मगतिंगतः ४०

पापिकालेअयंघातिउपायेहन्मीतिचेत्तत्राह अद्यवेति अवश्यभाविनिमरणेविलम्बमात्रापेक्षयापापाचरणमयुक्तमितिभावः ३८ किञ्च अस्मिन्देहेगतेयदि
देहान्तरस्यप्राप्तिरयुज्येनपापेनार्जितंतत् पालनन्तुनदृष्टमित्याह देहेपञ्चत्वमापन्नइति आपन्नेआपत्स्यमानेकर्मवशादयत्नेनएवप्रथमदेहान्तरमाप्यपश्चात्पूर्ववपुस्त्यजति ३९
अत्रदृष्टान्तः व्रजन्निति एकेनाग्रेनोन्निहितेनपदातिष्ठन् भुवमवष्टभ्यदेहविभ्रमन् पश्चादन्येनपूर्वमदेशादुत्थाप्यपुरोनिहितेनगच्छतितद्वत् अत्रचस्वीकारपरित्यागौ-
नात्यन्तभिन्नविषयाविति स्पष्टदृष्टान्तान्तरमाह यथातृणजलौकेति साहियथातृणान्तरमवष्टभ्यपूर्वंतृणंत्यजति एवंकर्मप्रत्ययेवर्तमानोऽन्योजीवोऽपि ४० ९

देहविषयाविवस्वीकारपरित्यागौ दर्शयितुं दृष्टांतांतरमाह स्वप्नइति दृष्टराजादिदर्शनं श्रुतमिंद्रादिश्रवणं ताभ्यामाहितसंस्कारेण मनसा तदेवानुचिंतयन् ईदृशं जा-
ग्रद्दृष्टश्रुतसदृशं देहं राजादिरूपं किमपि अनिरुक्तं पश्यति क्षणांतरे च तदेवाहमिति प्रपद्यते मन्यते ततश्च जाग्रद्देहादपगतस्मृतिर्भवति पुरुषो यथेति जाग्रत्ये-
वदर्शयितुं दृष्टांतांतरमाह मनोरथेनेति अत्रापि दृष्टश्रुताभ्यामित्यादि सर्वं योज्यम् तथा च वक्ष्यति जंतोर्वै कस्यचिद्धेतोर्मृत्युरत्यंतविस्मृतिः जन्मत्वात्मत-
यापुंसः सर्वभावेन भूरिद विषयस्वीकृतिं प्राहुर्यथा स्वप्नमनोरथः स्वप्नं मनोरथं चेत्थं प्राक्तनं न स्मरत्यसावित्यादि तद्वदत्रापि कर्मवशाद्देहांतरं प्राप्य प्राक्तनं त्यज-
तीति ४१ ननु विचित्रदेहहेतूनां कर्मणामानंत्याद्देहविशेषप्राप्तौ किं कारणमत आह यतो यत इति देहस्य पञ्चत्वसमये पंचसु गुणेषु भूतेषु मायारचितेषु मायया ना-
नादेहरूपेण रचितेषु दैवेन फलाभिमुखेन कर्मणा चोदितं नानाविकारात्मकं मनो यं यं देहं देवतिर्यगादिरूपं प्रति धावति धावच्च सत् यं यमाप अभिनिवेशेन प्राप्नु
तत्र तत्रासौ देही जायते ननु मनसः कर्तृत्वात् तदेव जायताम् न त्वकर्त्ताऽत्मा इत्यत आह प्रपद्यमान इति तदेवाहमिति मन्यमानस्तेन सह जायत इति ४२ ननु स-
त्यं भविष्यत्येव किमपि देहमात्रं तथाऽप्यस्यातिप्रियस्य राजदेहस्य रक्षणाय यत्नमपि क्रियत इति चेत्तत्राह ज्योतिरिति अदश्चंद्रादिज्योतिः उदकेषु तैलेषु पार्थिवे-

स्वप्ने यथा पश्यति देहमीदृशं मनोरथेनाभिनिविष्टचेतनः दृष्टश्रुताभ्यां मनसाऽनुचिंतयन् प्रपद्यते तत्किमपि ह्यपस्मृतिः ४१ यतो यतो
धावति दैवचोदितं मनो विकारात्मकमाप पंचसु गुणेषु मायारचितेषु देह्यसौ प्रपद्यमानः सह तेन जायते ४२ ज्योतिर्यथैवोदकपार्थिवे-
ष्वदः समीरवेगानुगतं विभाव्यते एवं स्वमायारचितेष्वसौ पुमान् गुणेषु रागानुगतो विमुह्यति ४३ तस्मान्न कस्यचिद्द्रोहमाचरेत्स त-
थाविधः आत्मनः क्षेममन्विच्छन् द्रोग्धुर्वै परतो भयम् ४४ एषा तवानुजा बाला कृपणा पुत्रिकोपमा हंतुं नार्हसि कल्याणीमिमां त्वं दी-
नवत्सलः ४५ श्रीशुक उवाच एवं स सामभिर्भेदैर्बोध्यमानोऽपि दारुणः न न्यवर्तत कौरव्य पुरुषादाननुव्रतः ४६ निर्बंधं तस्य
तं ज्ञात्वा विचिंत्यानकदुंदुभिः प्राप्तं कालं प्रतिव्योढुमिदं तत्रान्वपद्यत ४७ मृत्युर्बुद्धिमताऽपोह्यो यावद्बुद्धिबलोदयम् यद्यसौ न निवर्त्ते-
त नापराधोऽस्ति देहिनः ४८

षु घटादिषु यद्वा उदकेषु पार्थिवेषु तैलघृतादिषु च प्रतिबिंबेन स्थितं समीरस्य वायोर्वेगमनुगतं कंपादियुक्तं प्र-
तीयते यथा एवं स्वाविद्यारचितेषु गुणेषु देहेषु असौ रागेणानुगतः प्रविष्टो मुह्यति अभिनिवेशं प्राप्नोति अयं भावः आत्मनस्तावद्देहाध्यासाज्जन्मा-
त्कम् सह तेन जायत इति ततश्चान्योऽन्यधर्माध्यासाद्यथा देहादिधर्माः कार्श्यादयः आत्मनि प्रतीयंते एवमात्मधर्माः प्रेमास्पदत्वादयोऽपि देहादिष्वि-
ति राजसूकरदेहयोः विशेषाभावात् व्यर्थो मृत्युप्रतीकार इति ४३ एवमुक्तं सामोपायमुपसंहरन् भेदमाह तस्मादिति परत इति अभिद्रुह्यमा-
णात्तत्संबंधिनश्च यमादपि इहामुत्र च भयमिति भेदो दर्शितः ४४ पुनः साममेवाह एषेति पुत्रिकोपमा दारुमयीव अचेतनप्राया ४५ बोध्यमानः उपदिश्यमा-
नः स्वयं दारुणः पुनः पुरुषादान् दैत्याननुव्रतोऽनुसृत इति ४६ आनकदुंदुभिरिति पदं महाभाग इत्यत्रोक्ताभिप्रायम् प्रतिव्योढुं प्रतिकर्तुं वंचयितुमित्य-
र्थः इदं वक्ष्यमाणमपत्यार्पणम् अन्वपद्यत ज्ञातवान् ४७ ननु खलोऽयमेतन्न मन्येत इत्याशंक्य स्वयमेव विचारयति मृत्युरिति ४८ ७ ७

मू

तस्मादुपेक्षादोषपरिहारार्थमेव करिष्यामीत्याह प्रदायेति मृत्यवे कंसायननिदमपि नैव न्याय्यमित्याशङ्क्याह सुता इति अस्या यदि मे सुता जायेरन् तदा य दीति
कृतघ्नजीवितुना रक्षितेदेवनदनयगश्यपमेव म्रियेत तदा न किंचिदन्याय्यम् ४८ यदि च सुता भविष्यन्ति तत्रागमिष्यतेनेदा मन्नुभादेवास्य मरणमिति विपर्ययो नार्विन
स्यात् न हि पादरस कंसस्य नवनाठकालकृतमृत्युः स्यादिति आह गतिरिति धातुः अस्यास्त्वायत्ये मोग माहनेद्युक्तनन अनद्दर्शनमपत्यार्पणमनिर्णीतमेव मम तथासति
उपस्थितो मृत्युरपगतात्तान्निवर्तेत निवृत्त पुनः कालान्तरे आपतेच्च तदा नापराधो ममेत्यर्थः अथवास्य मत्सुतादुपस्थितो मृत्युरस्यानपायो निवर्तेत स पुनरनेनस्व
स्वभेदेन भवेद्वेति यदा गतिर्धातुर्दुरत्ययात्वेनास्य भयं न उपस्थितइति ४९ प्राणिनामदृष्टं दुर्विभाव्यमिति सदृष्टान्तमाह अग्नेरिति वनेषु वृक्षान् अदहन्न
ग्नि सन्निहितानपि वृक्षान् परित्यज्य कदाचित् दूरस्थानपि दहति मामेगृहान्वानत्यस्य आणयदृष्टव्यतिरेकेण किंचिन्नियामकमस्ति यथा एवं जन्तोर्जन्ममरणयो

प्रदाय मृत्यवे पुत्रान्मोचये कृपणामिमाम् सुता मे यदि जायेरन्मृत्युर्वा न म्रियेत चेत् ४९ विपर्ययो वा किं न स्याद्गतिर्धातुर्दुरत्यया
उपस्थितो निवर्तेत निवृत्तः पुनरापतेत् ५० अग्नेर्यथा दारुवियोगयोगयोरदृष्टतोऽन्यन्न निमित्तमस्ति एवं हि जन्तोरपि दुर्विभाव्यः
शरीरसंयोगवियोगहेतुः ५१ एवं विमृश्य तं पापं यावदात्मनिदर्शनम् पूजयामास वै शौरिर्बहुमानपुरःसरम् ५२ प्रसन्नवदनाम्भो
जो नृशंसं निरपत्रपम् मनसा दूयमानेन विहसन्निदमब्रवीत् ५३ वसुदेव उवाच न ह्यस्यास्ते भयं सौम्य यद्वै साहाशरीरवा
क् पुत्रान्समर्पयिष्येऽस्या यतस्ते भयमुत्थितम् ५४ श्रीशुक उवाच स्वसुर्वधान्निववृते कंसस्तद्वाक्यसारवित् वसुदेवोऽपि तं
प्रीतः प्रशस्य प्राविशद्गृहम् ५५ अथ काल उपावृत्ते देवकी सर्वदेवता पुत्रान्प्रसुषुवे चाष्टौ कन्यां चैवानुवत्सरम् ५६ कीर्तिमन्तं प्रथ
मजं कंसायानकदुन्दुभिः अर्पयामास कृच्छ्रेण सोऽनृतादतिविह्वलः ५७ किं दुःसहं नु साधूनां विदुषां किमपेक्षितम् किमकार्यं कद
र्याणां दुस्त्यजं किं धृतात्मनाम् ५८ दृष्ट्वा समत्वं तच्छौरेः सत्ये चैव व्यवस्थितिम् कंसस्तुष्टमना राजन्प्रहसन्निदमब्रवीत् ५९ ७

रपि हेतुर्दुर्विभाव्य अनित्य ५१ यावदात्मनिदर्शनस्वभावावधि विचार्य ५२ तस्य विश्वासाय विकसितमुखाम्भोजो विहसन्नब्रवीत् ५३ यत्त्वया अशरी
रिणी वागाह तथा हि निश्चितम् अस्याः सकाशात्ते भयं नास्ति यत येभ्य पुत्रेभ्यस्ते भयमुत्थितम् अष्टमो हन्तेत्युक्तेऽन्योन्यापेक्षया सर्वेऽप्यष्टमा भवेयुरि
त्युक्तत्वात्तानस्याः पुत्रान् समर्पयिष्ये ५४ निववृते निवृत्तः तद्वाक्ये सारउपपत्ति तांवित् ५५ प्रसूतिकाले प्राप्ते सर्वे सर्वात्मा भगवानेव देवता यस्याः सा त
था सर्वदेवतामयी नित्या भगवद्रूपत्वात् ५६ ५७ मृत्यवे पुत्रकथमर्पितवानित्यपेक्षायामाह किं दुःसहमिति साधूनां सत्यसंधानां पुत्रलालनस्त्रा
पेक्षाकथं त्यक्ता इत्यत आह विदुषामिति भगवानेव नत्वनान्यादि नि जानतामित्यर्थः ननु स्वयमनीत सनि कंसो बालं न हन्यादिति मत्वा नीतवानिति किं न स्यादिति
नेत्याह किमकार्यमिति ननु देवकी कथं पुत्रं त्याजेत्यत आह दुस्त्यजमिति चित्ते धृत आत्मा हरिर्यैस्तेषाम् ५८ ५९ ७ ७ ७ ७

६० ६१ कंसस्यशान्तिर्देवकार्यानुगुणानभवतीतिनारदस्यप्रत्यवस्थानंतदाह नंदाद्याइत्यादित्रयेण ६२ उभयोर्वसुदेवनंदकुलयोः ६३ वधोद्यमंदेवकृतमितिशेषः
६४ ६५ निगडैः शृंखलैः अजनोविष्णुस्तच्छंकया ६६ ६७ ६८ ६९ इतिदशमेटीकायांप्रथमोऽध्यायः १ द्वितीयेकंसघाताय देवक्यागर्भगोहरिः ब्र
ह्मादिभिः स्तुतः सा च सांत्वितेतिनिरूप्यते १ यदुभिःसव्यरुध्यतेत्युक्तंतमेवविरोधंप्रपंचयति त्वरयादेवकीगर्भस्यान्यत्रसंचारेणभगवतः प्रवेशंवक्तुमाह प्र

प्रतियातुकुमारोयंनत्वस्मादस्तिमेभयम् अष्टमाद्युवयोर्गर्भान्मृत्युर्मेविहितःकिल ६० तथेतिसुतमादायययावानकदुंदुभिः
नाभ्यनंदत्तद्वाक्यमसतोऽविजितात्मनः ६१ नंदाद्यायेव्रजेगोपायाश्चामीषाञ्चयोषितः वृष्णयोवसुदेवाद्यादेवक्याद्यायदुस्त्रियः
६२ सर्वेवैदेवताप्रायाउभयोरपिभारत ज्ञातयोबंधुसुहृदोयेचकंसमनुव्रताः ६३ एतत्कंसायभगवान् शशंसाभ्येत्यनारदः भूमे
र्भारायमाणानांदैत्यानांचवधोद्यमम् ६४ ऋषेर्विनिर्गमेकंसोयदून्मत्वासुरानिति देवक्यागर्भसंभूतंविष्णुंचस्ववधंप्रति ६५ देवकीं
वसुदेवंचनिगृह्यनिगडैर्गृहे जातंजातमहन्पुत्रंतयोरजनशंकया ६६ मातरंपितरंभ्रातॄन्सर्वांश्चसुहृदस्तथा घ्नंतिह्यसुतृपोलुब्धा
राजानःप्रायशोभुवि ६७ आत्मानमिहसंजातंजानन्प्राग्विष्णुनाहतम् महासुरंकालनेमिंयदुभिःसव्यरुध्यत ६८ उग्रसेनंचपितरं
यदुभोजांधकाधिपम् स्वयंनिगृह्यबुभुजेशूरसेनान्महाबलः ६९ इतिश्रीभागवतेमहापुराणेदशमस्कंधेकृष्णावतारोपक्रमेप्रथ
मोऽध्यायः १ श्रीशुकउवाच प्रलंबबकचाणूरतृणावर्तमहाशनैः मुष्टिकारिष्टद्विविदपूतनाकेशिधेनुकैः १ अन्यैश्चासुरभूपालै
र्बाणभौमादिभिर्युतः यदूनांकदनंचक्रेबलीमागधसंश्रयः २ तेपीडिताविविशुः कुरुपांचालकेकयान् शाल्वान्विदर्भान्निषधा
न्विदेहान्कोसलानपि ३ एकेतमनुरुंधानाज्ञातयःपर्युपासते हतेषुषट्सुबालेषुदेवक्याऔग्रसेनिना ४ सप्तमोवैष्णवंधामयमनं
तंप्रचक्षते गर्भोबभूवदेवक्याहर्षशोकविवर्धनः ५ भगवानपिविश्वात्माविदित्वाकंसजंभयम् यदूनांनिजनाथानांयोगमायांसमा
दिशत् ६ गच्छदेविव्रजंभद्रेगोपगोभिरलंकृतम् रोहिणीवसुदेवस्यभार्यास्तेनंदगोकुले अन्याश्चकंससंविग्नाविवरेषुवसंतिहि
७ देवक्याजठरेगर्भंशेषाख्यंधाममामकम् तत्सन्निकृष्यरोहिण्याउदरेसन्निवेशय ८ ७ श्रीसीतारामचंद्राभ्यां
नमः ७ श्रीराधाकृष्णाभ्यांनमः ७

लंबेत्यादि सार्द्धश्लोकत्रयेण महाशनोऽघासुरः १ २ ३ अनुरुंधाना अनुवर्त्तमानाः ४
धामकलातदेवससमोगर्भोबभूव किंतद्धामेत्यतआह यमनंतमिति हर्षशोकविवर्धनः आनंदरूपस्यावतीर्णत्वाद्धर्षः पूर्वगर्भसाधारणदृष्ट्याशोक
इति ५ ६ ननुसागोकुलेकिमित्यास्तेऽतआह अन्याश्चेति नकेवलंसैव अन्याअपीति विवरेषुगुप्तस्थानेषु ७ जठरेसंतम् ननुगर्भआ
कृष्यमाणः कथंजीवेदित्यतआह मामकंधामेति ततस्ततः ८ ७ ७ ७ ७

किमर्थमेतत्कार्यमित्यत आह अथेति अनन्तरमेवेत्यर्थः अंशभागेनेति अंशा शक्तिभिर्भजते अभितो भजति सर्वान् ब्रह्मादिस्तम्बपर्यन्तानित्यंशभागः तेन परिपूर्णे
नरूपेणेत्यर्थः यद्वा अंशैर्ज्ञानैश्वर्यबलादिभिर्भाजयति योजयति स्वीयानिति तथा तेनेति यद्वा अंशेन पुरुषरूपेण मायायां भागो भजनं यस्य तेन यद्वा अंशो
मायया गुणावतारादिरूपो भागो भेदो यस्य तेन यद्वा अंशा एव मत्स्यकूर्मादिरूपा भजनीयाः न तु साक्षात् स्वरूपं यस्य तेन यद्वा अंशा ज्ञानबलादयो भज
अनुवर्तनं भक्तेषु यस्य तेन सर्वथा परिपूर्णरूपेणेति विवक्षितम् कृष्णस्तु भगवान् स्वयमित्युक्तत्वादिति तामेवाह यतेति तथैवाद्यामिति सार्द्धचतुष्टयेन
मर्त्यान् प्रभावेन कामयन्ते येते तेषां सर्वाभिर्यथेष्टानि यन्त्रीम् अनेकासां सर्वान् कामवरान् ददातीत्यासाम् १० ११ १२ त्वाद्युक्रमेण तस्य व्यपदेशा भविष्यन्तीत्याह
गर्भसङ्कर्षणादित्यादिना रामेति निरसनार्थं करिष्यति तथा स्वरूपेणैव तेन लोकस्य रमणात् रत्युत्पादनात् १३ तथेति पुनरपि ओमित्यादरेण प्रतिगृह्य गाम् क्षितिम्
१४ विस्रंसित विस्रस्त इत्यर्थ इति विचुक्रुशुः नतु नष्ट इत्यर्थः १५ मन आविवेश मनस्याविर्बभूव जीवानामिव न धातुसम्बन्ध इत्यर्थः १६ धाम

अथाहमंशभागेन देवक्याः पुत्रतां शुभे प्राप्स्यामि त्वं यशोदायां नन्दपत्न्यां भविष्यसि ९ अर्चिष्यन्ति मनुष्यास्त्वां सर्वकामवरेश्वरीम् धू
पोपहारबलिभिः सर्वकामवरप्रदाम् १० नामधेयानि कुर्वन्ति स्थानानि च नरा भुवि दुर्गेति भद्रकालीति विजया वैष्णवीति च ११ कु
मुदा चण्डिका कृष्णा माधवी कन्यकेति च माया नारायणीशानी शारदेत्यम्बिकेति च १२ गर्भसङ्कर्षणात्तं वै प्राहुः सङ्कर्षणं भुवि रामेति
लोकरमणाद्बलभद्रं बलोच्छ्रयात् १३ सन्दिष्टैवं भगवता तथेत्योमिति तद्वचः प्रतिगृह्य परिक्रम्य गां गता तत्तथाकरोत् १४ गर्भे प्रणी
ते देवक्या रोहिणीं योगनिद्रया अहो विस्रंसितो गर्भ इति पौरा विचुक्रुशुः १५ भगवानपि विश्वात्मा भक्तानामभयङ्करः आविवेशां
शभागेन मन आनकदुन्दुभेः १६ स बिभ्रत्पौरुषं धाम भ्राजमानो यथा रविः दुरासदोऽतिदुर्धर्षो भूतानां सम्बभूव ह १७ ततो ज
गन्मङ्गलमच्युतांशं समाहितं शूरसुतेन देवी दधार सर्वात्मकमात्मभूतं काष्ठा यथानन्दकरं मनस्तः १८ सा देवकी सर्वजगन्निवासनिवा
सभूता नितरां न रेजे भोजेन्द्रगेहेऽग्निशिखेव रुद्धा सरस्वती ज्ञानखले यथा सती १९ तां वीक्ष्य कंसः प्रभयाऽजितान्तरां विरोचयन्तीं भव
नं शुचिस्मिताम् आहैष मे प्राणहरो हरिर्गुहां ध्रुवं श्रितो यन्न पुरेयमीदृशी २०

मूर्तिम १७ जगन्मङ्गलं जगतो मूर्तिमन्मङ्गलम् अच्युतांशम् अच्युता
श्च्युतिरहिता अंशा ऐश्वर्यादयो यस्य तम् यद्वा अच्युतस्य अंश इवांशः भक्तानामनुग्रहार्थं परिच्छिन्नवपुरित्यर्थः सम्यग्भूतमेवाहितं वेधदीक्षया अर्पितम् देवी द्योत
माना शूरसुतेनेत्यर्थः सर्वात्मकं सर्वस्यात्मानम् अत एवात्मभूतं तस्मिन्नादावेव सन् मनस्तः मनसैव दधार धारणया धृतवती अत्रानुरूपं दृष्टान्तमाह यथा का
ष्ठा प्राची दिक् आनन्दकरं चन्द्रमिति १८ सर्वजगन्निवासस्य श्रीहरेर्निवासभूतासत्यपि नितरां सर्वजनाह्लादकतया न रेजे किन्तु स्वयमेवानन्दमन्वभवत् यत कंस
स्य गृहे रुद्धा अन्यैर्न दृश्यते घटादिरुद्धा अग्निशिखा दीप इव तथा सती शोभमाना सरस्वती ज्ञानखले ज्ञानवञ्चके रुद्धा यथा अन्येषामनुपकारिणी न राजते तद्वत् १९ प्र
भया भवनं विरोचयन्तीम् अजित अन्तरे कुक्षिमध्ये यस्यास्ताम् एष विरोचमान ध्रुवं हरिरेव यद्यस्मात् ईदृशी इयं पुरा पूर्वं नासीत् २० ७ ७

ननुतर्हिसामाद्युपायाः नेतिस्वयमेवाह अयमर्थतंत्रोदेवकार्यप्रधानः विक्रमंनविहंति मद्वधेपराक्रमंकरिष्यत्येवेत्यर्थः यद्वा तर्हिइदानीमेवायंहन्यतामिति
नेत्याह अर्थतंत्रोऽपिपुमान्स्त्रीविक्रमंनविहंतिननाशयति स्त्रीवधेतन्नाशःस्यादितिभावः तदेवाह स्त्रियाइति गुरुमत्यागुर्विण्याः २१ किंच सएव-
जीवन्नपिमृतःस्यात् नृशंसितेनक्रौर्येणयोवर्तेत तंजीवंतमेवमनुजाः शपंतिदुर्वाक्यैर्धिक्कुर्वंति सचदेहेमृतेतनुमानिनः पापिनोनरकंगच्छंति अथ
वाशापप्रकारमेवाह तनुमानिनोऽस्यदेहेमृतेऽयंध्रुवमंधंतमोगमिष्यतीति २२ २३ संविशन् शयानः २४ रम्याभिर्गीर्भिः वृषणंकामवर्षिणमैडयन्नतुष्टु
वुः २५ प्रतिश्रुतंसत्यंकृतमितित्वद्वपाःसंतःसत्यत्वेनैवप्रथमंस्तुवंति सत्यव्रतमिति सत्यव्रतंसंकल्पोयस्यतम् सत्यंपरंश्रेष्ठंप्राप्तिसाधनंयस्मिंस्तं त्रिसत्यं
त्रिष्वपिकालेषुसृष्टेःपूर्वंप्रलयानंतरंचस्थितिसमयेचसत्यमव्यभिचारेणवर्तमानम् तदेवाहुः सत्यस्ययोनिमिति सच्छब्देनपृथिव्यप्तेजांसि त्यच्छब्देनवा
य्वाकाशौ एवंसच्चत्यच्चसत्यंभूतपंचकंतत्सत्यमित्याचक्षतइतिश्रुतेः तस्ययोनिंकारणमनेनपूर्ववर्तमानतोक्ता तथासत्येतस्मिन्नेवनिहितमंतर्यामितयास्थितम्
अनेनस्थितिसमयेपिसत्यत्वमुक्तम् तथासत्यस्यसत्यंतस्यैवसत्यस्यसत्यंपारमार्थिकंतन्नाशेप्यवशिष्यमाणरूपम् अनेनप्रलयेऽप्यबाधितत्वेनसत्यत्वंदर्शितं

किमद्यतस्मिन्करणीयमाशुमेयदर्थतंत्रोनविहंतिविक्रमम् स्त्रियाःस्वसुर्गुरुमत्यावधोयंयशःश्रियंहंत्यनुकालमायुः २१ सएवजीवन्
खलुसंपरेतोवर्ततयोत्यंतनृशंसितेन देहेमृतेतंमनुजाःशपंतिगंतातमोऽधंतनुमानिनोध्रुवम् २२ इतिघोरतमाद्भावात्संनिवृत्तःस्वयं
प्रभुः आस्तेप्रतीक्षंस्तज्जन्महरेर्वैरानुबंधकृत् २३ आसीनःसंविशंस्तिष्ठन्भुंजानःपर्यटन्महीम् चिंतयानोहृषीकेशमपश्यत्तन्म
यंजगत् २४ ब्रह्माभवश्चतत्रैत्यमुनिभिर्नारदादिभिः देवैःसानुचरैःसाकंगीर्भिर्वृषणमैडयन् २५ सत्यव्रतंसत्यपरंत्रिसत्यंसत्यस्ययो
निंनिहितंचसत्ये सत्यस्यसत्यमृतसत्यनेत्रंसत्यात्मकंत्वांशरणंप्रपन्नाः २६ एकायनोसौद्विफलस्त्रिमूलश्चतूरसःपंचविधःषडा
त्मा सप्तत्वगष्टविटपोनवाक्षोदशच्छदीद्विखगोह्यादिवृक्षः २७

एवंत्रिसत्यत्वमुपपादितं तथाऋतसत्यनेत्रम् ऋतंचसूनृतावाणीसत्यंच-
समदर्शनम् तथाभगवताव्याख्यास्यमानत्वात् सत्यंचसमदर्शनं ऋतंचसूनृतावाणीकविभिःपरिकीर्तितेतितयोर्नेत्रंनयनसाधनंनेतारंप्रवर्तकमितियावत्
एवंसर्वप्रकारेणसत्यात्मकंत्वांभगवन्वयंशरणंप्रपन्नाःस्मपाहीति २६ ननुभवंतोऽपिलोकेश्वरामत्तुल्याएवकिमितिमांशरणंप्रपद्यंते नैववाच्यंत्वमेवैकः
सर्वेश्वरः सर्वसृष्ट्यादिकारणत्वात् वयंत्वदेकशरणाएवलोकादिरूपंद्वैतंचसर्वंत्वद्व्यतिरेकेणनास्तीतिवक्तुंद्वैतप्रपंचंवृक्षरूपकेणनिरूपयंति एकायनइति
असौप्रपंचआदिवृक्षः वृश्च्यतइतिवृक्षः समष्टिव्यष्टिदेहरूपः कथंभूतः एकायनः एकाप्रकृतिरयनमाश्रयोयस्यसः द्वेसुखदुःखेफलेयस्यसः त्रयोगुणा
मूलानियस्यसः धर्मार्थकाममोक्षाश्चत्वारोरसायस्यसः पंचइंद्रियाणिविधाज्ञानप्रकारायस्यसः षडूर्मयःकोशावाआत्मानःस्वभावायस्यसः सप्त
धातवः त्वचोयस्य पंचभूतानिमनोबुद्ध्यहंकाराश्चेत्यष्टौविटपाः शाखाविस्तारायस्यसः नवद्वाराणि अक्षाः छिद्राणियस्यसः दशप्राणाः छदाः प
त्राणिविद्यंतेयस्यसदशच्छदी द्वौजीवेश्वरौखगौयस्मिन्सद्विखगः २७

त्वय्यंबुजाक्षेत्यादिना श्लोकत्रयेण भगवद्भक्तानामेव मोक्षो नान्येषामित्युक्तम् तत्र कर्मफलं भक्तिं विना माभूत् मोक्षस्तु ज्ञानैकसाध्यत्वात् किं भक्त्येति साङ्ख्यशा-
यान् प्रत्याहुः सत्त्वं न चेदिति हे धातः इदं सत्त्वं निजं तव वपुर्न भवेच्चेत्तर्हि विज्ञानं विशिष्टमपरोक्षं ज्ञानं न भवेदित्यनुषंगः कथंभूतम् अज्ञानभिदापमार्जनम्
अज्ञानं च तत्कृता भिदा च तयोरपमार्जनं निवर्तकं यद्वा अज्ञानं भिनत्तीत्यज्ञानभित् विज्ञानं मार्जनं नाशमपि प्राप्तमेवेति ननु जडानां बुद्ध्यादीनां यतः प्रका-
शः तद्बुद्ध्येति ज्ञानं भवेदेवेति चेन्न गुणप्रकाशैः गुणावच्छिन्नैः प्रकाशैर्भवान् सर्वसाक्षी पूर्णः केवलमनुमीयते कल्प्यते न तु साक्षात् क्रियत इत्यर्थः अनुमानप्र-
कारमाहुः प्रकाशते यस्य च येन वा गुणा इति यस्य संबंधी अयं बुद्ध्यादिगुणः प्रकाशते यो गुणसाक्षीत्येवं येन वा बुद्ध्यारूढेन प्रमात्रा बुद्ध्याधिष्ठात्रा वाऽयं गुणः
प्रकाशत इत्यनुमीयत इत्यर्थः शुद्धसत्त्ववपुषि त्वयि सेव्यमाने तु तदाकारेऽन्तःकरणे त्वत्प्रसादेन साक्षात्कारो भवेदिति भावः ३५ एवं तावद्भक्तानामभ्युदया-
पवर्गौ यद्रूपाणि विभर्षीत्युक्तम् तान्यपि भजनीयानि केवलं न तु ज्ञातुं शक्यन्ते अनंतत्वादतर्क्यत्वाच्च मनोवचसोरगोचरत्वादित्याहुः न नामरूपे इति गुणाः ज-

सत्त्वं न चेद्धातरिदं निजं भवेद्विज्ञानमज्ञानभिदापमार्जनम् गुणप्रकाशैरनुमीयते भवान् प्रकाशते यस्य च येन वा गुणाः ३५ न ना-
मरूपे गुणजन्मकर्मभिर्निरूपितव्ये तव तस्य साक्षिणः मनोवचोभ्यामनुमेयवर्त्मनो देव क्रियायां प्रतियन्त्यथापि हि ३६ शृण्वन्
गृणन् संस्मरयंश्च चिंतयन्नामानि रूपाणि च मंगलानि ते क्रियासु यस्त्वच्चरणारविंदयोराविष्टचेता न भवाय कल्पते ३७ दि-
ष्ट्या हरेऽस्या भवतः पदो भुवो भारोऽपनीतस्तव जन्मनेशितुः दिष्ट्यांकितां त्वत्पदकैः सुशोभनैर्द्रक्ष्याम गां द्यां च तवानुकंपिताम् ३८
न तेऽभवस्येश भवस्य कारणं विना विनोदं बत तर्कयामहे भवो निरोधः स्थितिरप्यविद्यया कृता यतस्त्वय्यभयाश्रयात्मनि ३९ म-
त्स्याश्वकच्छपनृसिंहवराहहंसराजन्यविप्रविबुधेषु कृतावतारः त्वं पासि नस्त्रिभुवनं च यथाऽधुनेश भारं भुवो हर यदूत्तम वंदनं ते ४०

न्मानि कर्माणि च तैर्निरूपितव्ये निरूपणार्हे न भवतः कुतः अनुमेयं वर्त्म मार्गो यस्य तवेति तत्रापि हेतुः तस्य साक्षिण इति नहि साक्षिणस्तत्त्वं मनोवचोगो-
चरमित्यर्थः हे देव बहुधा द्योतमान अथापि क्रियायामुपासनादिलक्षणायां त्वां प्रतियन्त्युपासकाः साक्षात्पश्यन्ति हि प्रसिद्धम् ३६ तस्माद्भक्त्यैव मो-
क्ष इत्युपसंहरति शृण्वन्निति अन्यानपि संस्मारयन् क्रियासु देवार्चनादिकर्मसु ३७ विशेषतः श्रीकृष्णावतारमभिनंदति दिष्ट्येति दिष्ट्या भद्रम् त-
व पदः पादभूतायाः ईश्वरस्य तव जन्ममात्रेणापनीत एव किंच त्वत्पदकैः कोमलैः पदैः सुशोभनैः वज्रांकुशादिशुभलक्षणैः गां पृथ्वीं द्यां स्व-
र्गं च तव त्वयाऽनुकंपिताम् ३८ तव जन्मना भारोऽपनीत इत्युक्त्या ममापि किं जीववत्संसार उक्तः नहि नहीत्याहुः नेति बत हे ईश असंसारिणस्ते ज-
न्मनः कारणं क्रीडां विना न तर्कयामः किंच हे अभयाश्रय न भयमाश्रयं तद्गति तथा तत्संबोधनम् हे नित्यमुक्त इत्यर्थः तव जन्मकारणं नास्तीति किं वक्त-
व्यम् यतो जीवात्मन्यपि भवादयः त्वयि विषये याऽविद्या तया कृताः न परमार्थतः संतीति ३९ प्रस्तुतं प्रार्थयंते मत्स्याश्वेति नोऽस्मांस्त्रिभुवनं च
अन्यदा यथा पासि तथाऽधुनापि पाहीति वंदनं ते इति वदंतः सर्वे शिरोभिः प्रणमंति ४०

नैर्भीत्यमाह दिष्ट्येति नः अस्माकं भवाय उद्भवाय अम्ब हे मातः पुमांस्ते कुक्षिगतः अतो भयं मा भूदिति ४१ यद्रूपमनिदं सर्वमन्यत्कृतम् यथा यथावत्
प्रत्यानन्दधिया नरहरिरूपास्तु इति मन्यमाना ब्रह्मेशानौ पुरोधाय प्रतः कृत्वा ययुरिति ४२ इति दशमे टीकायां द्वितीयोऽध्यायः २ तृतीये तु जनक-
णनम् अनन्तस्तु हरिः स्तवम् पितृभ्यां संस्तुतो नीतः पित्रा नीतेन गोकुलम् १ अथेति मंगलार्थं यर्हि सर्वगुणोपेतः कालोऽभवत् तदा देवक्यां प्रादुरासीदिति
तारादिग्रहसम्पत्कृतनानात्वम् परमशोभनत्वमेवाह यर्हीत्यादिना अजनात् नारायणात् जन्म यस्य प्रजापतेस्तस्य ऋक्षं रोहिणीनक्षत्रम् कथंभूतम् शान्
तानि ऋक्षाणि ग्रहास्तारकाश्च यस्मिन् तत् यर्हीति सर्वत्रानुषज्यते १ निर्मलानामुडुगणानामुदयो यस्मिन् तत् तथा मंगलानि भूयिष्ठानि येषु पुरादिषु
ते आकराः २ जलरुहैः श्रीः येषां ते द्विजालिकुलानां सन्नादा एव स्तवकाः स्तोत्राणि येषां ते ३ समिन्धत आडागमोऽनद्यतन्य समैधतेति सम्यग्दीप्ता ब-

दिष्ट्याम्ब ते कुक्षिगतः परः पुमानंशेन साक्षाद्भगवान्भवाय नः मा भूद्भयं भोजपतेर्मुमूर्षोर्गोप्ता यदूनां भविता तवात्मजः ४१ श्रीशुक
उवाच इत्यभिष्टूय पुरुषं यद्रूपमनिदं यथा ब्रह्मेशानौ पुरोधाय देवाः प्रतिययुर्दिवम् ४२ इति श्रीभागवते महापुराणे दशमस्कन्धे-
गर्भगतविष्णोर्ब्रह्मादिकृतस्तुतिर्नाम द्वितीयोऽध्यायः २ श्रीशुक उवाच अथ सर्वगुणोपेतः कालः परमशोभनः यर्ह्येवाजनजन्म
र्क्षं शान्तर्क्षग्रहतारकम् १ दिशः प्रसेदुर्गगनं निर्मलोडुगणोदयम् मही मंगलभूयिष्ठपुरग्रामव्रजाकरा २ नद्यः प्रसन्नसलिला
ह्रदा जलरुहश्रियः द्विजालिकुलसन्नादस्तवका वनराजयः ३ ववौ वायुः सुखस्पर्शः पुण्यगन्धवहः शुचिः अग्नयश्च द्विजातीनां
शान्तास्तत्र समिन्धत ४ मनांस्यासन्प्रसन्नानि साधूनामसुरद्रुहाम् जायमानेऽजने तस्मिन्नेदुर्दुन्दुभयो दिवि ५ जगुः किन्नरग-
न्धर्वास्तुष्टुवुः सिद्धचारणाः विद्याधर्यश्च ननृतुरप्सरोभिः समं तदा ६ मुमुचुर्मुनयो देवाः सुमनांसि मुदान्विताः मन्दं मन्दं जल
धरा जगर्जुरनुसागरम् ७ निशीथे तमउद्भूते जायमाने जनार्दने देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः आविरासीद्यथा प्रा-
च्यां दिशीन्दुरिव पुष्कलः ८ तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदार्युदायुधम् श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं पीताम्बरं
सान्द्रपयोदसौभगम् ९ महार्हवैदूर्यकिरीटकुण्डलत्विषा परिष्वक्तसहस्रकुन्तलम् उद्दामकाञ्च्यङ्गदकङ्कणादिभिर्विरोचमानं वसु
देव ऐक्षत १० स विस्मयोत्फुल्लविलोचनो हरिं सुतं विलोक्यानकदुन्दुभिस्तदा कृष्णावतारोत्सवसंभ्रमोऽस्पृशन्मुदा द्विजेभ्योऽयुतमा
प्लुतो गवाम् ११

भूवुरित्यर्थः ४ असुरद्रुहां कंसादिव्यतिरिक्तानां सर्वप्राणिनां देवानां चेति स्वर्गेऽपि विशेषमाह जायमान इति अजने जायमाने ५ त
दा आसन्न प्रसन्ना यस्मिन् तस्मिन् समये ६ ७ तमसा उद्भूते घनतमसि निशीथे यथा यथावत् ऐश्वर्येणैव रूपेण ८ तमद्भुतं बालकं सम्यक् देव ऐक्षतेति टि
नीयश्लोकेनान्वयः अद्भुतत्वे हेतुगर्भाणि विशेषणानि अम्बुजेक्षणमित्यादीनि श्रीवत्सलक्ष्म श्रीवत्सलक्ष्माणं गले शोभत इति गलशोभी कौस्तुभो यस्मि
न् ९ परिष्वक्तसहस्रकुन्तलम् किरीटकुण्डलादीनां त्विषा स्फुरद्भिः परितः मितकेशमित्यर्थः १० विस्मयेनोत्फुल्ले विकसिते लोचने यस्य सः गवामयुतमस्पृशत् मनसा द
दौ भवान् कंसनिगृहीतस्य दानासंभवात् स्पर्शहेतुः कृष्णावतारेति मुदा आप्लुतो व्याप्तः स्नात इति वा ११ ७

कृतधीः शुद्धबुद्धिः १२ वसुदेवः प्रथमं पुत्रबुद्ध्या पश्यन् तां परित्यज्याह अहो विदितोऽसीति कथं विदितोऽस्मि भवान् प्रकृतेः परः पुरुष इति ननु किमाश्चर्यं पुरुषस्य प्र-
कृतेरन्यत्वं दैवेति अत आह साक्षादिति प्रत्यक्षत इत्यर्थः ननु अक्षिसन्निकृष्टं प्रत्यक्षत उपलभ्यते किं चित्रमित्यत आह केवलेति केवलश्चासावनुभवश्च आनन्दश्च तदे-
व स्वरूपं यस्य सः किंच सर्वबुद्धिदृक् साक्षी न हि एवंभूतो दृश्यो भवतीत्यर्थः १३ ननु देवकीजठरे प्रविष्टस्य किमियं मतिस्तुतिः क्रियते अत आह स एवेति स एवोक्त-
स्वरूप एव त्वं न देवकीजठरे प्रविष्ट इत्यर्थः ननु विश्वं सृष्ट्वा तदनु प्रविष्टस्य किं सेतद्बहु अत आह स्वप्रकृत्येति स्वमायया सृष्ट्वा तदनु त्वमप्रविष्ट एवेति ननु तर्हि क-
थं श्रुत्योच्यते तत्सृष्ट्वा तदेवानुप्राविशदिति अत आह प्रविष्ट इवेति भाव्यसे निरूप्यसे प्रत्यक्षतो वा स्वरूपेण वा प्रविष्ट इव लक्ष्यसे १४ अत्र दृष्टान्तः यथेति इमेऽवि-
कृता भावा महदादयो यथा तथेति दृष्टान्तं विवृणोति ते विकृतैरिति ते विकृतैः षोडशभिर्विकारैः सह सन्निपत्य विराजं जनयन्ति सन्निपतने हेतुः यतः पृथग्भूताः सन्तो
नानावीर्या विशिष्टकार्यसमर्था न भवन्ति १५ ननु तेषां कार्ये प्रवेशः कथं कल्प्यते कार्याद्बहिरेव वा भिन्नवास्तु अत्र जायत इति किं न स्यादिति चेत्तत्राह प्रागेवेति कार्योत्प-
त्तेः प्रागेव तेषां विद्यमानत्वान्न तेषां भूतानामिह कार्ये संभवः अतः सन्निपत्येति एवं समुत्पाद्य अनुगताः प्रविष्टा इव दृश्यन्ते न पुनः प्रविष्टाः कुतः उत्पत्तेः प्रागेव का-

अथैनमस्तौदवधार्य पूरुषं परं नताङ्गः कृतधीः कृताञ्जलिः स्वरोचिषा भारत सूतिकागृहं विरोचयन्तं गतभीः प्रभाववित् १२ वसुदे-
व उवाच विदितोऽसि भवान् साक्षात्पुरुषः प्रकृतेः परः केवलानुभवानन्दस्वरूपः सर्वबुद्धिदृक् १३ स एव स्वप्रकृत्येदं सृष्ट्वा-
ग्रे त्रिगुणात्मकम् तदनु त्वं ह्यप्रविष्टः प्रविष्ट इव भाव्यसे १४ यथेमेऽविकृता भावास्तथा ते विकृतैः सह नानावीर्याः पृथग्भूता वि-
राजं जनयन्ति हि १५ सन्निपत्य समुत्पाद्य दृश्यन्तेऽनुगता इव प्रागेव विद्यमानत्वान्न तेषामिह संभवः १६ एवं भवान् बुद्ध्यनुमेयल-
क्षणैर्ग्राह्यैर्गुणैः सन्नपि तद्गुणाग्रहः अनावृतत्वाद्बहिरन्तरं न ते सर्वस्य सर्वात्मन आत्मवस्तुनः १७

रणतया विद्यमानत्वान्न तेषामिह सृष्टे
कार्ये पश्चात्संभवः प्रवेश इति १६ दार्ष्टान्तिके अतिदिशति एवं भवानिति ननु यद्यहमप्रच्युतस्वरूप एव कारणतया कार्येषु वर्ते तर्हि तेषु इन्द्रियैर्गृह्यमाणेषु मम ग्रहणं-
किं नास्ति तत्राह बुद्ध्यनुमेयलक्षणैरिति बुद्ध्या रूपादिज्ञानेनानुमेयं लक्षणं स्वरूपं येषां तैर्गुणैः इन्द्रियैः ग्राह्यैर्गुणैः सह सन्नपि वर्तमानोऽपि तद्गुणाग्रहः तैर्गुणैः
सह न गृह्यसे अयं भावः न हि ग्राह्यैः सह भावमात्रं ग्रहणे कारणं किंतु इन्द्रियाणां शक्तिः सा च कार्यैकसमधिगम्या यथा कार्यमेव कल्प्यते अतो यथा चक्षुषा रूप-
ग्रहणे रसादिग्रहणं नास्ति तथैव विषयग्रहणे त्वद्ग्रहणमपीति अविषयत्वेन त्वद्ग्रहणानर्हत्वमुक्तमेव सर्वबुद्धिदृक् इत्यत्र एवं तावत् प्रागेव विद्यमानत्वात् प्रवेशो ना-
स्ति इत्युक्तम् किंच परिच्छिन्नस्य नीडपक्ष्यादेरिव प्रवेशो भवेत् त्वत्तु अनावृतत्वादपरिच्छिन्नत्वेन बहिरन्तर्भेदो नास्ति कुतः प्रवेश इत्याह अनावृतत्वादिति
अनावृतत्वे हेतुमाह सर्वस्येति न हि सर्वरूपस्यान्यदावरकमस्ति सर्वात्मनः न ह्येकेनावृतोऽन्यस्यात्मा भवेत् आत्मवस्तुन इति आत्मनो वस्तुनश्चेति हेतु-
द्वयम् अत सातत्यगमन इत्यस्मात् अतति व्याप्नोतीत्यात्मा न हि व्यापकस्यावरणं घटते तथा वस्तुनः परमार्थवस्तुनः आवरणं न घटत इत्यर्थः तस्मात्त्वं तत्तया-
मित्तया प्रवेशो न स्म रव्योऽस्ति कुतस्तरां गर्भप्रवेशः अतः केवलानुभवानन्दस्वरूप एव त्वं विदितोऽसीत्याश्चर्यं मम भाग्यमित्यर्थः १७

नन्वेवं तु नतत्त्वमानस्यास्त्वेपटेन नतुनमाभवति सत्यत्वेनभानीरित्याशङ्क्याह यइति आत्मनोदृश्यगुणेषुदृश्यादिषु सन्मतिरेकेन आत्मव्यतिरेकेण दृश्यकृ-
तान्यपदार्थदर्शनव्यवस्यतेऽध्यवस्यति सपुमान् सोऽबुधः अविद्वान् व्यतिरेकदर्शनात् किंच मनीषितविचारितसत् देहादिसर्वंगत विनाऽनुवादं वाचारम्भणमा
त्रंविनानसम्यगाराम मनीषितस्तुतेनत्यक्तं वापिनमतवस्तुतः स्याउपाददत् स्वीकुर्वन्नबुधइत्यर्थः १८ एवंपरमेश्वरस्य स्वव्यतिरेकेणासत्वमुक्तम् परमे
श्वरोपादानतादृशमव्यतिरेकेणासत्वमित्याह त्वत्तोऽस्येति नचैवमसत्योपि विकारित्वमित्याह अनीहादिति अगुणत्वादनीहत्वमतोऽविकारित्वमित्यर्थः ननु
नीहत्वे कथंकर्तृत्वंकर्तृत्वंवाकुतोऽविकारित्वंतथाह त्वयीश्वरइति अहमस्यविकारित्वमीश्वरत्वात्कर्तृत्वमिति नन्वनदपिविरुद्धमेव नेत्याह त्वदाश्रयत्वादिति गुणै
कर्तृत्वं त्वयिस्वाभाविकंनतुसगुणत्वे गुणाश्रयत्वात् यथाभृत्यकृतंराजनीति १९ एवंभूतस्यैवतवयथाविश्वस्थितिसर्गलयार्थंत्रिवर्णागुणावतारा
स्तथाभूभारहरणार्थमवतारमित्याह सत्वमितिश्लोकद्वयेन २० रिरक्षिषुः रक्षितुमिच्छुः अवतीर्णोऽसिहेप्रभोनिर्णयेन भत साधूनांरक्षणार्थं
राजन्यसंज्ञासुरकोटियूथपैर्निर्व्यूह्यमानाइतस्ततश्चाल्यमानाश्चमूः सेनानिहनिष्यसि संहरिष्यसि २१ किंतुतथाप्यसभ्यत्वेनत्वदाभास्यमित्याह

यआत्मनोदृश्यगुणेषुसन्नितिव्यवस्यतेस्वव्यतिरेकतोऽबुधः विनानुवादंनचतन्मनीषितंसम्यग्यतस्त्यक्तमुपाददत्पुमान् १८
त्वत्तोऽस्यजन्मस्थितिसंयमान्विभोवदन्त्यनीहादगुणादविक्रियात् त्वयीश्वरेब्रह्मणिनोविरुध्यतेत्वदाश्रयत्वादुपचर्यतेगुणैः १९
सत्वंत्रिलोकस्थितयेस्वमाययाबिभर्षिशुक्लंखलुवर्णमात्मनः सर्गायरक्तंरजसोपबृंहितंकृष्णंचवर्णंतमसाजनात्यये २० त्वमस्य
लोकस्यविभोरिरक्षिषुर्गृहेऽवतीर्णोऽसिममाखिलेश्वर राजन्यसंज्ञासुरकोटियूथपैर्निर्व्यूह्यमानानिहनिष्यसेचमूः २१ अयंत्वसभ्य
स्तवजन्मनौगृहेश्रुत्वाग्रजांस्तेन्यवधीत्सुरेश्वर सतेऽवतारंपुरुषैःसमर्पितंश्रुत्वाधुनैवाभिसरत्युदायुधः २२ श्रीशुकउवाच अ
थैनमात्मजंवीक्ष्यमहापुरुषलक्षणम् देवकीतमुपाधावत्कंसाद्भीतासुविस्मिता २३ देवक्युवाच रूपंयत्तत्प्राहुरव्यक्तमाद्यंब्रह्म
ज्योतिर्निर्गुणंनिर्विकारम् सत्तामात्रंनिर्विशेषंनिरीहंसत्वंसाक्षाद्विष्णुरध्यात्मदीपः २४ अयंत्विति असभ्यः खलः समर्पितंकथितं अभिसरति

आगमिष्यति २२ उपाधावत् अस्तौत् २३ त्वयिभयशङ्केवनावन्नास्तीतिस्तौत्स्तुवन्नाह देवकीकिंनिर्दिष्टापयितुरूपमिति यत्तत्किमपिरूपंवस्तुप्राहुर्वेदाः किं
तद्वस्तुतदाह अव्यक्तं अन्यहेतु आद्यंकारणं किंपरमाणवः नब्रह्मबृहत् किंप्रधानम् नज्योतिः चेतनम् किंवैशेषिकाणामिवज्ञानगुणम् ननिर्गुणम् किंभास्कर
नामिवज्ञानपरिणामिननिर्विकारम् किंकणादानामिवशक्तिविक्षेपपरिणामिनसत्तामात्रम् तर्हिकिंसामान्यम् ननिर्विशेषम् तर्हिकिंकारणत्वात्सक्रियम्
ननिरीहम् सन्निधिमात्रेणकारणम् एवंभूतंकिमपिकार्यकल्पंयद्वस्तुसएवसाक्षात्त्वंविष्णुरिति अपरोक्षत्वमेत्याह अध्यात्मदीपइति बुद्ध्यादिकरणसंघातप्र
काशकइत्यर्थः अथवा अव्यक्तंकेनापिप्रकारेणव्यज्यतइत्यव्यक्तम् कथम् असत्यात्तावन्नव्यज्यतइत्याह आद्यंसर्वस्यकार्यस्याद्यम् अनादीत्यर्थः तथाब्र
ह्मज्योतिर्निर्गुणंनिर्विकारमितित्रिभिः पदैर्द्रव्येनप्रकाशात्मगुणेनस्वविकारेणचव्यक्तिंनिराकरोति तथासत्तामात्रमितिविशेषेणनिर्विशेषमितिसामान्येननिरीहमि
ति क्रिययाचव्यक्तिंनिराकरोति अन्यत्समानम् एवंभूतस्यतवनभयशङ्केतिभावः २४

किंचमहाप्रलयेऽप्यवशिष्यमाणस्यकुतोभयमित्याह नष्टेलोकेइति परान्तेलोकेमहाभूतेषुलीने ष्वादिभूतंभूतसूक्ष्मंप्रविष्टेषुतस्मिन्नपिव्यक्तेऽव्यक्तंप्रधानंप्राप्ते-
अशेषात्मकेप्रधानेसंज्ञाप्रज्ञायस्य एवंभूतेलीनमिदंमयिअस्तिपश्चात्पुनःप्रबोधनीयमितिसशेषसंज्ञः शेषसंज्ञइतिवा २५ एवंप्रलयहेतुर्योऽयंकालः एनंहे अव्यक्तबंधो
प्रकृतिप्रवर्तकतस्यप्रलयपर्यंतस्यतेतवचेष्टांलीलां चेष्टतेविपरिवर्ततेपुनः पुनः वत्सरान्तस्समहीयान् द्विपरार्धरूपः यस्यचेष्टामाहुः तंत्वात्वांक्षेमधामअभ-
यस्थानंप्रपद्येशरणंव्रजामि २६ क्षेमधामत्वमेवाह मर्त्यइति लोकान्प्रतियदृच्छयाकेनापिभाग्योदयेन हेआद्य २७ प्रस्तुतंविज्ञापयति सत्वमिति भृत्यानांवि-
त्रासंहंतीति भृत्यवित्रासहा भृत्यविदितिविच्छेदः पौरुषंऐश्वरंध्यानधिष्ण्यंध्यानास्पदंमांसदृशांमांसचक्षुषांप्रत्यक्षंमाकृथाः २८ भवतएवहेतोर्निमित्तात्कंसा

नष्टेलोकेद्विपरार्धावसानेमहाभूतेष्वादिभूतंगतेषु व्यक्तेऽव्यक्तंकालवेगेनयातेभवानेकःशिष्यतेशेषसंज्ञः २५ योऽयंकालस्तस्यते
व्यक्तबंधोचेष्टामाहुश्चेष्टतेयेनविश्वम् निमेषादिर्वत्सरांतोमहीयांस्तंत्वेशानंक्षेमधामप्रपद्ये २६ मर्त्योमृत्युव्यालभीतःपलायन्लो
कान्सर्वान्निर्भयंनाध्यगच्छत् त्वत्पादाब्जंप्राप्ययदृच्छयाऽद्यस्वस्थःशेतेमृत्युरस्मादपैति २७ सत्वंघोरादुग्रसेनात्मजान्नस्त्राहि
त्रस्तान्भृत्यवित्रासहासि रूपंचेदंपौरुषंध्यानधिष्ण्यंमाप्रत्यक्षंमांसदृशांकृषीष्ठाः २८ जन्मतेमय्यसौपापोमाविद्यान्मधुसूदन
समुद्विजेभवद्धेतोःकंसादहमधीरधीः २९ उपसंहरविश्वात्मन्नदोरूपमलौकिकम् शंखचक्रगदापद्मश्रियाजुष्टंचतुर्भुजम् ३०
विश्वंयदेतत्स्वतनौनिशांतेयथाऽवकाशंपुरुषःपरोभवान् बिभर्तिसोऽयंममगर्भगोऽभूदहोनृलोकस्यविडंबनंहितत् ३१ श्रीभगवा
नुवाच त्वमेवपूर्वसर्गेऽभूःपृश्निःस्वायंभुवेसति तदायंसुतपानामप्रजापतिरकल्मषः ३२ युवांवैब्रह्मणादिष्टौप्रजासर्गेयदाततः
सन्नियम्येंद्रियग्रामंतेपाथेपरमंतपः ३३ वर्षवातातपहिमघर्मकालगुणाननु सहमानौश्वासरोधविनिर्धूतमनोमलौ ३४ शीर्णप
र्णानिलाहारावुपशांतेनचेतसा मत्तःकामानभीप्संतौमदाराधनमीहतुः ३५ एवंवांतप्यतोस्तीव्रंतपःपरमदुष्करम् दिव्यवर्षस
हस्राणिद्वादशेयुर्मदात्मनोः ३६ तदावांपरितुष्टोऽहममुनावपुषानघे तपसाश्रद्धयानित्यंभक्त्याचहृदिभावितः ३७ प्रादुरासंवर
दराड्युवयोःकामदित्सया व्रियतांवरइत्युक्तेमादृशोवांवृतःसुतः ३८

त्समुद्विजे बिभेमि यतोऽधीरचित्ता २९ ३० किमित्युपसंहर्तव्यमे
वंभूतेनमयापुत्रेणतवमहतीश्लाघास्यात् इतितत्राह विश्वमिति निशांतेप्रलयावसानेयथाऽवकाशमसंकोचतः असंभावितत्वादुपहास्यमेवस्यादित्यर्थः ३१ चतु
र्भुजेनरूपेणाविर्भावेकारणंतावदाह त्वमेवेत्यादिचतुर्दशभिः पूर्वसर्गेप्रथमजन्मनिअभूः आसीः पृश्निर्नामस्वायंभुवेमन्वंतरेतदाअयंवसुदेवः ३२ तेपाथेतपः
कृतवंतौ ३३ ३४ ३५ तप्यतोराचरतोः ईयुर्गतानि मदात्मनोः मच्चित्तयोः ३६ अमुनावपुषा ३७ प्रादुरासंप्रादुर्भूतोस्मि वरदराट् वरदेषुश्रेष्ठइ-
त्यर्थः तेनसकृद्वरेणच वारंवारमाविर्भावेकारणमुक्तम् कामस्यदित्सयादातुमिच्छया मादृशः मयासदृशः ३८

मेभक्तोऽपियुवामपवर्गेनवव्राथे नरतवनो ३९ वरंदत्वामयिगते ४० ४१ अदृष्ट्वाकश्यपादामनः आसेतिपत्तदापिनद्रूपेवोर्युवयोरहमपपुनरप्यभिवत्यर्थः ४२ ४३भक्तमयमतापदेतद्रूपमेजन्मेतिस्मरणायजानापदर्शितम् मद्भवमद्विषयमनन्तरत्वादित्युक्तानाठोपिभविष्यतीतिभावः ४४नतुत्वपिप्रसन्नेऽपिकथमावयोःपुनःजन्मेत्यतःपरंप्राप्तिविष्यनीत्याह युवामिति ४५ ४६ ४७ यदिकस्मादिभीपितर्हिमागोकुलंनयपश्यास्यमाम्बनाकन्यामन्मायामानयेति प्रथममेवभगवताभक्तादितावसुदेवोपद्यगन्तुमैच्छत् तदेव अजापित्मयोगमायासानंदजायपानिमित्तमाभूतप्राग्जनिष्यानास ४८ हृता मत्यपाणाः सर्वाद्यत्तयोये

अजुएयास्मृतिपपावुनप्रस्योत्वदपती नवव्राथेऽपवर्गमपोहितोदेवमायया ३९ गतेमयियुवांलब्ध्वावरंमत्सदृशंसुतम् ग्राम्यान्भोगानभुञ्जाथांयुवांप्राप्तमनोरथौ ४० अदृष्ट्वान्यतमंलोकेशीलौदार्यगुणैः समम् अहंसुतोवामभवंपृश्निगर्भइतिश्रुतः ४१ तयोर्वांपुनरेवाहमदित्यामासकश्यपात् उपेन्द्रइतिविख्यातोवामनत्वाच्चवामनः ४२ तृतीयेस्मिन्भवेहंवैतेनैववपुषाथवाम् जातोभूयस्तयोरेवसत्यंमेव्याहृतंसति ४३ एतद्वांदर्शितंरूपंप्राग्जन्मस्मरणायमे नान्यथामद्भवंज्ञानंमर्त्यलिंगेनजायते ४४ युवांमांपुत्रभावेनब्रह्मभावेनचासकृत् चिन्तयन्तौकृतस्नेहौयास्येथेमद्गतिंपराम् ४५ यदिकंसाद्विभीपितर्हिमागोकुलंनय मन्मायामानयाशु त्वंयशोदागर्भसंभवाम् ४६ श्रीशुकउवाच इत्युक्त्वासीद्धरिस्तूष्णींभगवानात्ममायया पित्रोःसंपश्यतोःसद्योबभूवप्राकृतःशिशुः ४७ ततश्चशौरिर्भगवत्प्रचोदितः सुतंसमादायससूतिकागृहात् यदाबहिर्गन्तुमियेषतर्ह्यजायायोगमायाजनिनंदजायया ४८ तयाहृतप्रत्ययसर्ववृत्तिषुद्वाःस्थेषुपौरेष्वपिशायितेष्वथ द्वारस्तुसर्वाःपिहितादुरत्ययाबृहत्कपाटायसकीलशृंखलैः ४९ ताःकृष्णवाहेवसुदेवआगतेस्वयंव्यवर्यन्तयथातमोरवेः ववर्षपर्जन्यउपांशुगर्जितः शेषोऽन्वगाद्वारिनिवारयन्फणैः ५० मघोनिवर्षत्यसकृद्यमानुजा गंभीरतोयौघजवोर्मिफेनिला भयानकावर्तशताकुलानदीमार्गंददौसिंधुरिवश्रियःपतेः ५१ नंदव्रजंशौरिरुपेत्यतत्रतान्गोपान्प्रसुप्तानुपलभ्यनिद्रया सुतंयशोदाशयनेनिधायतत्सुतामुपादायपुनर्गृहानगात् ५२ देवक्याःशयनेन्यस्यवसुदेवोऽथदारिकाम् प्रतिमुच्यपदोर्लोहमास्तेपूर्ववदावृतः ५३ यशोदानंदपत्नीचजातंपरमबुध्यत नतल्लिंगंपरिश्रान्तानिद्रयापगतस्मृतिः ५४ इ० भा० म० दशमस्कंधेकृष्णजन्मनितृतीयोऽध्यायः ३

या अपयात्रताः मत्यपा अन्यान्मसर्वद्यत्तयोयेषांआयतानामपि यथामूतेपुद्वारपालेषु सत्सुबृहत्कपाटेषु लोहशृंखलकयुक्तस्वर्गलैः दुर्गेर्दुःकपाटादिभिःदुरत्ययाश्चिता ४९ स्वयमेवव्यवर्यन्तविघटनादित्यर्थः व्यावृणवंतेतिवत्तव्येसगणच्छान्दसः रवेर्निमित्तात् ५० गंभीरो यस्तोयौघःतस्यजवेनवेगमेयस्तेः फेनिलाफेनव्याप्ता भयानकैरावर्तशतैर्व्याप्ता श्रियः पतेःसीतापतेः ५१ निद्रयाअजया ५२ प्रतिमुच्य बध्वापदयोःपादयोः लोहंनिगडमास्तेस्म ५३ जातंकिंचिदिति केवलमबुध्यत नतुतल्लिंगपुंभःकन्यावेति योगनिद्रयात्वमोहितेनि ५४ इतिदशमस्कंधेनी तृतीय्य ३

चतुर्थेचंडिकावाक्यमाकर्ण्यातिभयाकुलः दुर्मंत्रिभिर्हितंमेनेकंसोबालादिहिंसनम् १ १तत्अष्टमंजन्म २कालोमृत्युः ३ ४ ५अंगहे भ्रातः ६दीनदीनवत्दीना
द्रौपदीनवत् नतुतथा पुनस्त्यान्यत्रनीतत्वात् सा च योगमायेतिज्ञानत्वात् याचितोऽपिआचिच्छिदे आकृष्यजग्राह ७ अपोथयत्बलेनचिक्षेप ८ सद्यएवदेवी भूत्वा ९
१० ११ कृपणानिति अन्यान् शिशून्हनिष्यतीतिज्ञात्वावारयति पाठांतरे मामाकृपणांवृथाऽहिंसीः हिंसितवानसीति बहुनामानिकेतेषुवाराणस्यादिस्थानेषु १२
१३ परमविस्मितः कथंदेवीवागनृताजातेति १४ भामहेभगिनी भर्त्तः पुरुषादोराक्षसः यथास्वापत्यमेवहिनस्ति तद्वत् १५ १६ १७ हेमहाभागौस्वकृतंभुजः स्वारब्धक

श्रीशुकउवाच बहिरंतःपुरद्वारःसर्वाःपूर्ववदावृताः ततोबालध्वनिंश्रुत्वागृहपालाःसमुत्थिताः १ तेतुतूर्णमुपव्रज्यदेवक्यागर्भजन्मतत् आ
चख्युर्भोजराजाययदुद्विग्नःप्रतीक्षते २ सतल्पात्तूर्णमुत्थायकालोयमितिविह्वलः सूतिगृहमगात्तूर्णंप्रस्खलन्मुक्तमूर्धजः ३ तमाहभ्रा
तरंदेवीकृपणाकरुणंसती स्नुषेयतवकल्याणस्त्रियंमाहंतुमर्हसि ४ बहवोहिंसिताभ्रातःशिशवःपावकोपमाः त्वयादैवनिसृष्टेनपुत्रि
कैकाप्रदीयताम् ५ नन्वहंतेह्यवरजादीनाहतसुताप्रभो दातुमर्हसिमंदायाअंगेमांचरमांप्रजाम् ६ श्रीशुकउवाच उपगुह्यात्मजामेवंरु
दत्यादीनदीनवत् याचितस्तांविनिर्भर्त्स्यहस्तादाचिच्छिदेखलः ७ तांगृहीत्वाचरणयोर्जातमात्रांस्वसुःसुताम् अपोथयच्छिलापृष्ठेस्वा
र्थोन्मूलितसौहृदः ८ सातद्धस्तात्समुत्पत्यसद्योदेव्यंबरंगता अदृश्यतानुजाविष्णोःसायुधाष्टमहाभुजा ९ दिव्यस्रगंबरालेपरत्नाभरण
भूषिता धनुःशूलेषुचर्मासिशंखचक्रगदाधरा १० सिद्धचारणगंधर्वैरप्सरःकिन्नरोरगैः उपाहृतोरुबलिभिःस्तूयमानेदमब्रवीत् ११ किं
मयाहतयामंदजातःखलुतवांतकृत् यत्रक्ववापूर्वशत्रुर्माहिंसीःकृपणान्वृथा १२ इतिप्रभाष्यतंदेवीमायाभगवतीभुवि बहुनामनिकेते
षुबहुनामाबभूवह १३ तयाऽभिहितमाकर्ण्यकंसःपरमविस्मितः देवकींवसुदेवंचविमुच्यप्रश्रितोऽब्रवीत् १४ अहोभगिन्यहोभाममया
वांबतपाप्मना पुरुषादइवापत्यंबहवोहिंसिताःसुताः १५ सत्वहंत्यक्तकारुण्यस्त्यक्तज्ञातिसुहृत्खलः कांल्लोकान्वैगमिष्यामिब्र-
ह्महेवमृतःश्वसन् १६ दैवमप्यनृतंवक्तिनमर्त्याएवकेवलम् यद्विश्रंभादहंपापःस्वसुर्निहतवान्शिशून् १७ माशोचतंमहाभागावात्म
जान्स्वकृतभुजः जंतवोनसदैकत्रदैवाधीनाःसहासते १८ भुविभौमानिभूतानियथायांत्यपयांतिच नायमात्मातथैतेषुविपर्येतियथै
वभूः १९

मैवोक्तम् किंच जंतवःप्राणिनःसदानासते किंतु अल्पकालमेव तदाऽपिएकत्रनासते किंतु वियुज्यंते यतोदैवाधीनाः १८ सदानासत
इत्यनेन यदुक्तंजन्ममरणादितदपिदेहानामेवनआत्मनइत्याह भुवीति भूतानिदेहाएवभवंतिनभवंतिचेत्यर्थः यथा भुविभौमानिघटादीनि तद्वत् एतेषुभू
तेषुजन्मादिभिर्विक्रियमाणेषु अयमपरोक्षतयाप्रत्यभिज्ञायमानोनविपर्येति विपर्ययंनप्राप्नोति एकरूपएववर्त्तत इत्यर्थः भौमेषुविकियमाणेषुयथाभू
स्तथेति एवंविचार्यमाणेसति नशोकाद्यवकाशः १९ ७ ७ ७ ७ ७ ७

चतुर्थेचंडिकावाक्यमाकर्ण्यातिभयाकुलः दुर्मंत्रिभिर्हितंमेनेकंसोबालादिहिंसनम् १ १तत्अष्टमंजन्म २कालोमृत्युः ३ ४ ५अंगहेभ्रातः ६दीनदीनवत्दीना
दपिदीनवत् नतुतथापुत्रस्यान्यत्रनीतत्वात् साचयोगमायेतिज्ञातत्वात् याचितोऽपिआचिच्छिदेआकृष्यजग्राह ७अपोथयत्बलेनचिक्षेप ८ सद्यएवदेवीभूत्वा९
१० ११कृपणानिति अन्यान् शिशून्हनिष्यसि इतिज्ञात्वावारयति पाठांतरेमामाकृपणांवृथाऽहिंसीः हिंसितवानसीति बहुनामनिकेतेषुवाराणस्यादिस्थानेषु १२
१३ परमविस्मितःकथंदेवीवागनृताजातेति १४ भामहेभगिनी भर्त्तःपुरुषादोराक्षसःयथास्वापत्यमेवहिनस्तितद्वत् १५ १६ १७ हेमहाभागोस्वकृतंभुजःस्वारब्धक

श्रीशुकउवाच बहिरंतःपुरद्वारःसर्वाःपूर्ववदावृताः ततोबालध्वनिंश्रुत्वागृहपालाःसमुत्थिताः १ तेतुतूर्णमुपव्रज्यदेवक्यागर्भजन्मतत् आ
चख्युर्भोजराजाययदुद्विग्नःप्रतीक्षते २ सतल्पात्तूर्णमुत्थायकालोयमितिविह्वलः सूतिगृहमगात्तूर्णंप्रस्खलन्मुक्तमूर्धजः ३ तमाहभ्रा
तरंदेवीकृपणाकरुणंसती स्नुषेयंतवकल्याणस्त्रियंमाहंतुमर्हसि ४ बहवोहिंसिताभ्रातःशिशवःपावकोपमाः त्वयादैवनिसृष्टेनपुत्रि
कैकाप्रदीयताम् ५ नन्वहंतेह्यवरजादीनाहतसुताप्रभो दातुमर्हसिमंदायाअंगेमांचरमांप्रजाम् ६ श्रीशुकउवाच उपगुह्यात्मजामेवंरु
दत्यादीनदीनवत् याचितस्तांविनिर्भर्त्स्यहस्तादाचिच्छिदेखलः ७ तांगृहीत्वाचरणयोर्जातमात्रांस्वसुःसुताम् अपोथयच्छिलापृष्ठेस्वा
र्थोन्मूलितसौहृदः ८ सातद्धस्तात्समुत्पत्यसद्योदेव्यंबरंगता अदृश्यतानुजाविष्णोःसायुधाष्टमहाभुजा ९ दिव्यस्रगंबरालेपरत्नाभरण
भूषिता धनुःशूलेषुचर्मासिशंखचक्रगदाधरा १० सिद्धचारणगंधर्वैरप्सरःकिन्नरोरगैः उपाहृतोरुबलिभिःस्तूयमानेदमब्रवीत् ११ किं
मयाहतयामंदजातःखलुतवांतकृत् यत्रक्ववापूर्वशत्रुर्माहिंसीःकृपणान्वृथा १२ इतिप्रभाष्यतंदेवीमायाभगवतीभुवि बहुनामनिकेते
षुबहुनामाबभूवह १३ तयाऽभिहितमाकर्ण्यकंसःपरमविस्मितः देवकींवसुदेवंचविमुच्यप्रश्रितोऽब्रवीत् १४ अहोभगिन्यहोभाममया
वांबतपाप्मना पुरुषादइवापत्यंबहवोहिंसिताःसुताः १५ सत्वहंत्यक्तकारुण्यस्त्यक्तज्ञातिसुहृत्खलः कांल्लोकान्वैगमिष्यामिब्र
ह्महेवमृतःश्वसन् १६ दैवमप्यनृतंवक्तिनमर्त्याएवकेवलम् यद्विश्रंभादहंपापःस्वसुर्निहतवाञ्छिशून् १७ माशोचतंमहाभागावात्म
जान्स्वकृतंभुजः जंतवोनसदैकत्रदैवाधीनाःसहासते १८ भुविभौमानिभूतानियथायांत्यपयांतिच नायमात्मातथैतेषुविपर्येतियथैव
भूः १९

र्भोगोकृत् किंच जंतवःप्राणिनःसदानासते किंतु अल्पकालमेव तदाऽपिएकत्रनासते किंतु वियुज्यंते यतोदैवाधीनाः १८ सदानासत
इत्यनेन यदुक्तंजन्ममरणादितदपिदेहानामेवनआत्मनइत्याह भुवीति भूतानिदेहाएवभवंतिनभवंतिचेत्यर्थः यथाभुविभौमानिघटादीनितद्वत् एतेषुभू
तेषुजन्मादिभिर्विक्रियमाणेषु अयमपरोक्षतयाप्रत्यभिज्ञायमानोनविपर्येति विपर्ययंनप्राप्नोति एकरूपएववर्त्तत इत्यर्थः भौमेषुविक्रियमाणेषुयथाभू
स्तथेति एवंविचार्यमाणेसति नशोकाद्यवकाशः १९

एकादशेसमागमस्तद्वृन्दावनमथार्भकैः वत्सान्पालयताऽनेनहतौवत्सबकासुरौ १ निर्घातोवज्रपातइतिभयेनशङ्किताः १ तल्लक्ष्यमसत्त पुरतोद्वयमपिपतनका रणमविज्ञायबभ्रमुः २ लक्ष्यकारणंदर्शयति उलूखलमिति भ्रमकारणमाह कस्येदंकस्यप्रसादेः कमकुतोवाकारणात् अहोआश्चर्यमुत्पातइतिकातरा भीता सवो धाबभ्रमुरित्यर्थः ३ मध्यगेनवृक्षयोर्मध्यगतेन नकेवलमेतावत् वृक्षाभ्यानिर्गतौदिव्यौपुरुषावप्यचक्ष्महि दृष्टवन्तोवयमिति ४ केवलतार्किकानजगृहुरेकअन्ये तु सन्देहयुक्तचित्ताबभूवुरिति ५ भगवन्मायाविमोहितस्यनन्दस्याचरितमाह उलूखलमिति ६ तास्यतेमामितिशङ्कमानोऽतीवबाल्यमनुकरोतिस्म तदाह

श्रीशुकउवाच गोपानन्दादयः श्रुत्वाद्रुमयोः पततोरवम् तत्राजग्मुः कुरुश्रेष्ठनिर्घातभयशङ्किताः १ भूम्यांनिपतितौतत्रददृशुर्यमला र्जुनौ बभ्रमुस्तदविज्ञायलक्ष्यंपतनकारणम् २ उलूखलंविकर्षन्तंदाम्नाबद्धंचबालकम् कस्येदंकुतआश्चर्यमुत्पातइतिकातराः ३ बालाऊचुरनेनेतितिर्यग्गतमुलूखलम् विकर्षतामध्यगेनपुरुषावप्यचक्ष्महि ४ नतेतदुक्तंजगृहुर्नघटेतेतितस्यतत् बाल स्योत्पाटनंतर्वोः केचित्सन्दिग्धचेतसः ५ उलूखलंविकर्षन्तंदाम्नाबद्धंस्वमात्मजम् विलोक्यनन्दः प्रहसद्वदनोविमुमोचह ६ गोपी भिः स्तोभितोऽनृत्यद्भगवान्बालवत्क्वचित् उद्गायतिक्वचिन्मुग्धस्तद्वशोदारुयन्त्रवत् ७ बिभर्तिक्वचिदाज्ञप्तः पीठकोन्मानपादुकं बाहुक्षेपंचकुरुतेस्वानांचप्रीतिमावहन् ८ दर्शयंस्तद्विदांलोकआत्मनोभृत्यवश्यताम् व्रजस्योवाहवैहर्षंभगवान्बालचेष्टितैः ९ गोपवृद्धामहोत्पातानमनुभूयबृहद्वने नन्दादयः समागम्यव्रजकार्यममन्त्रयन् १० तत्रोपनन्दनामाहगोपोज्ञानवयोऽधिकः देशकालार्थ तत्त्वज्ञः प्रियकृद्रामकृष्णयोः ११ उत्थातव्यमितोऽस्माभिर्गोकुलस्यहितैषिभिः आयान्त्यत्रमहोत्पाताबालानांनाशहेतवः १२ मुक्तः कथञ्चिद्राक्षस्याबालघ्न्याबालकोह्यसौ हरेरनुग्रहान्नूनमनश्चोपरिनापतत् १३ चक्रवातेननीतोऽयंदैत्येनविपदंवियत् शिलायांप तितस्तत्रपरित्रातः सुरेश्वरैः १४ यन्नम्रियेतद्रुमयोरन्तरंप्राप्यबालकः असावन्यतमोवापितदप्यच्युतरक्षणम् १५ यावदौत्पातिकोऽ रिष्टोव्रजंनाभिभवेदितः तावद्बालानुपादाययास्यामोऽन्यत्रसानुगाः १६ वनंवृन्दावनंनामपशव्यंनवकाननम् गोपगोपीगवांसे व्यंपुण्याद्रितृणवीरुधम् १७ तत्तत्राद्यैवयास्यामः शकटान्युङ्क्तमाचिरम् गोधनान्यग्रतोयान्तुभवतांयदिरोचते १८ तच्छ्रुत्वैकधि योगोपाः साधुसाध्वितिवादिनः व्रजान्स्वान्स्वान्समायुज्यययूरूढपरिच्छदाः १९

गोपीभिरिति स्तोभितः करतालादिनाप्रोत्साहितः ७

इदमानयेत्याज्ञप्तः आनेतुमसमर्थइवबिभर्तिकेवलपीठादि बाहुक्षेपंकरचालनंच तद्विदांचेतिचकारान्वयः ८ तदैश्वर्यविदांतियेतेषाम् एवंव्रजस्यहर्षमुवा हेति ९ एतुवृन्दावनगतुमंत कृष्णेनयन्त्रिता स्वतन्त्राइवनन्दाद्यामन्त्रमेतमर्मन्त्रयन् व्रजकार्यंगोकुलस्यहितकृत्यम् १० ११ १२ १३ विपदंवीनांपक्षिणा स्थानम् वियत्नभः विगतमपतिष्ठवा १४ अन्यतमोवाकश्चिद्बालः अच्युतेनैवरक्षणमासीत् १५ अरिष्टः अनर्थः इत स्थानात् १६ पशव्यंपशुभ्योहितम् नवा निकाननान्यवान्तराणिविद्यतेयस्मिन्तत् १७ १८ एकधियः विप्रतिपत्तिरहिताः व्रजान् शकटव्यूहान् रूढाः शकटादिष्वारोपिताः परिच्छदायैस्ते १९ ७९

यत्ताः कृतप्रयत्नाः २० २१ नूत्नैः कुचगतैः कुंकुमैः कांतिर्यासांताः नूत्नेषुकुचेषुयत्कुंकुमंतेनकांतिर्यासामितिवा २२ २३ व्रजावासंगोकुलवसतिस्थानम् २४
२५ स्वकालेनतद्योग्यकालेन २६ कौमारलीलांनिरूपयति अविदूरइत्यादिना २७ क्षेपणैःबिल्वामलकादिभिः किंकिणीयुक्तैःपादैःक्षिपतःताडयतः
वत्सपालाएवद्वित्राः कंबलादिपिहिताःवृषरूपमनुकुर्वंतितैःसह २८ स्वयमपितथैववृषायमाणौनर्दंतौ तदनुकारिशब्दान्कुर्वंतौ युयुधाते इत्यर्थः रुतैःश

वृद्धान्बालांस्त्रियोराजन्सर्वोपकरणानिच अनस्स्वारोप्यगोपालायत्ताआत्तशरासनाः २० गोधनानिपुरस्कृत्यशृंगाण्यापूर्यस
र्वतः तूर्यघोषेणमहताययुःसहपुरोहिताः २१ गोप्योरूढरथानूत्नकुचकुंकुमकांतयः कृष्णलीलाजगुःप्रीतानिष्ककंठ्यःसुवास
सः २२ तथायशोदारोहिण्यावेकंशकटमास्थिते रेजतुःकृष्णरामाभ्यांतत्कथाश्रवणोत्सुके २३ वृंदावनंसंप्रविश्यसर्वकालसु
खावहम् तत्रचक्रुर्व्रजावासंशकटैरर्धचंद्रवत् २४ वृंदावनंगोवर्धनंयमुनापुलिनानिच वीक्ष्यासीदुत्तमाप्रीतीराममाधवयो
र्नृप २५ एवंव्रजौकसांप्रीतिंयच्छंतौबालचेष्टितैः कलवाक्यैःस्वकालेनवत्सपालौबभूवतुः २६ अविदूरेव्रजभुवःसहगोपाल
दारकैः चारयामासतुर्वत्सान्नानाक्रीडापरिच्छदौ २७ क्वचिद्वादयतोवेणुंक्षेपणैःक्षिपतःक्वचित् क्वचित्पादैःकिंकिणीभिः
क्वचित्कृत्रिमगोवृषैः २८ वृषायमाणौनर्दंतौयुयुधातेपरस्परम् अनुकृत्यरुतैर्जंतूंश्चेरतुःप्राकृतौयथा २९ कदाचिद्यमुना
तीरेवत्सांश्चारयतोःस्वकैः वयस्यैःकृष्णबलयोर्जिघांसुर्दैत्यआगमत् ३० तंवत्सरूपिणंवीक्ष्यवत्सयूथगतंहरिः दर्शयन्बल
देवायशनैर्मुग्धइवासदत् ३१ गृहीत्वाऽपरपादाभ्यांसहलांगूलमच्युतः भ्रामयित्वाकपित्थाग्रेप्राहिणोद्गतजीवितं सकपित्थै
र्महाकायःपात्यमानैःपपातह ३२ तंवीक्ष्यविस्मिताबालाःशशंसुःसाधुसाध्विति देवाश्चपरिसंतुष्टाबभूवुःपुष्पवर्षिणः ३३ तौवत्सपालकौभू
त्वासर्वलोकैकपालकौ सप्रातराशौगोवत्सांश्चारयंतौविचेरतुः ३४ स्वंस्वंवत्सकुलंसर्वेपाययिष्यंतएकदा गत्वाजलाशयाभ्याशंपाययित्वापपु
र्जलम् ३५ तेतत्रददृशुर्बालामहासत्त्वमवस्थितम् तत्रसुवज्रनिर्भिन्नंगिरेःशृंगमिवच्युतम् ३६ सवैबकोनाममहानसुरोब
करूपधृक् आगत्यसहसाकृष्णंतीक्ष्णतुंडोऽग्रसद्बली ३७ कृष्णंमहाबकग्रस्तंदृष्ट्वारामादयोऽर्भकाः बभूवुरिंद्रियाणीवविना
प्राणंविचेतसः ३८

ब्दैः जंतून्हंसमयूरादीन् २९ ३० मुग्धइव अजानन्निवआसदत् समीपमागमत् ३१ अपरपादाभ्यांसलांगूलंयथाभवति
तथागृहीत्वा ३२ ३३ सर्वेषांलोकानामेकौमुख्यौपालकौ ३४ अभ्याशःसमीपम् ३५ ३६ ३७ रामआदिर्येषांते नतुरामः ३८ ६
प्रातराशाः प्रातर्भोज्यं अन्नं तत्सहितौ ३४

३९ तुण्डयोः चञ्च्वोः वीरणवद्ग्रथिततृणविशेषवत् ४० समीडिरे तुष्टुवुः आनकैः शङ्खैश्च संस्तवैः सह ४१ स्वस्थानमागतं प्राणमिव कृष्णं प्रणीय एकीकृत्य ४२ अतिप्रियेण प्रीत्या आदृता सादरा प्रेत्यागतमिव लोकान्तरादागतमिव तृषितान्यतृप्तानि अमृतं पिबन्तीव ईक्षणानि येषां ते ४३ अहो बतेत्यादि श्लोकत्रयस्य इति नन्दादय इत्यनेनान्वयः अपि एवमपि तेषामेवानिष्टमासीत् यतस्तैः पूर्वमन्येषां भयकृतम् ४४ अथ घोरदर्शना अपि नाभिभवन्ति नश्य

तत्तालुमूलं प्रदहत्तमग्निवद्गोपालसूनुं पितरं जगद्गुरोः चच्छर्द सद्योऽतिरुषाक्षतं बकस्तुण्डेन हन्तुं पुनरभ्यपद्यत ३९ तमापतन्तं स निगृह्य तुण्डयोर्दोर्भ्यां बकं कंससखं सतां पतिः पश्यत्सु बालेषु ददार लीलया मुदावहो वीरणवद्दिवौकसाम् ५० तदा बकारिं सुरलोकवासिनः समाकिरन्नन्दनमल्लिकादिभिः समीडिरे चानकशङ्खसंस्तवैस्तद्वीक्ष्य गोपालसुता विसिस्मिरे ५१ मुक्तं बकास्यादुपलभ्य बालका रामादयः प्राणमिवेन्द्रियो गणः स्थानागतं तं परिरभ्य निर्वृताः प्रणीय वत्सान्व्रजमेत्य तज्जगुः ५२ श्रुत्वा तद्विस्मिता गोपा गोप्यश्चातिप्रियादृताः प्रेत्यागतमिवोत्सुक्यादैक्षन्त तृषितेक्षणाः ४२ अहो बतास्य बालस्य बहवो मृत्यवोऽभवन् अप्यासीद्विप्रियं तेषां कृतं पूर्वं यतो भयम् ५४ अथाप्यभिभवन्त्येनं नैव ते घोरदर्शनाः जिघांसयैनमासाद्य नश्यन्त्यग्नौ पतङ्गवत् ५५ अहो ब्रह्मविदां वाचो नासत्याः सन्ति कर्हिचित् गर्गो यदाह भगवानन्वभावि तथैव तत् ५६ इति नन्दादयो गोपाः कृष्णरामकथां मुदा कुर्वन्तो रममाणाश्च नाविन्दन्भववेदनाम् ५७ एवं विहारैः कौमारैः कौमारं जहतुर्व्रजे निलायनैः सेतुबन्धैर्मर्कटोत्प्लवनादिभिः ४८ इति श्रीभाग० महा० दशमस्कन्धे वत्सबकवधो नामैकादशोऽध्यायः ११ श्रीशुक उवाच क्वचिद्वनाशाय मनो दधद्व्रजात्प्रातः समुत्थाय वयस्यवत्सपान् प्रबोधयञ्छृङ्गरवेण चारुणा विनिर्गतो वत्सपुरःसरो हरिः १ तेनैव साकं पृथुकाः सहस्रशः स्निग्धाः सुशिग्वेत्रविषाणवेणवः स्वान्स्वान्सहस्रोपरिसंख्ययान्वितान्वत्सान्पुरस्कृत्य विनिर्ययुर्मुदा २

र्यन्ति ४५ गर्गो यदाह तस्मान्नन्दात्मजोऽयं तेनारायणसमो गुणैरित्यादि वत्सयूथगतं हत्वा वत्सदमासुरं हरिः मुनियूथमतं चाहन्नयण्यदभिलाषकम् ४६ ४७ ४८ इति दशमे टीकायामेकादशोऽध्यायः ११ द्वादशे तु महासर्पवपुर्धरमघासुरम् वत्सपालगिलं कृष्णो गलेऽहन्निति वर्ण्यते १ महायकगलक्रीडाकेवलस्य न कौतुकम् इतीवाघासुरमुखे ससखं भाविघान्हरिः २ क्वचित् कदाचित् वनाशाय वने एव प्रथमं भोजनं कर्तुम् १ तेनैव शृङ्गरवेण श्रीकृष्णेन च पृथुका बाला स्निग्धाः स्नेहयुक्ताः शिक् शिक्यम् रम्या शिग्वेत्रादयो येषां ते सहस्राधिकसंख्यायुक्तान्वत्सान् २

३ काचादिभिः पूर्वमातृभिर्भूषिताअपिफलादिभिरात्मानमभूषयन्नित्यर्थः ४ मुष्णंतश्चोरयंतः ५ यदिदूरंगतःकृष्णोभवतितर्हीति ६ ध्मांतःवादयंतः भृंगैःसह ७ विच्छायाभिःपक्षिच्छायाभिःकलापिभिर्मयूरैः ८ कीशबालान्वृक्षशाखासुलंबमानानिवानरलांगूलानिआकर्षंतः लांगूलममुंचंतः तैःसहद्रुमानारोहंतः विकुर्वंतःदंतदर्शनभ्रूविजृंभादिभिःतैःसहविकारान्कुर्वंतः पलाशिषुवृक्षेषुप्लवंतः शाखायाःशाखांतरमुड्डीयंतः ९ प्रति-च्छायाःप्रतिबिंबानि १० तानतिविस्मितःश्लोकद्वयेनाभिनंदति इत्थमिति सतांविदुषांब्रह्मचनतत्सुखंचानुभूतिर्यस्यस्वप्रकाशपरमसुखेनेत्यर्थः भक्तानांपरदैवतेनआत्मप्रदेननाथेनमायाश्रितानांतुनरदारकतयाप्रतीयमानेनसहविजह्रुः कृतानांपुण्यानांपुंजाःराशयोयैस्तेते ब्रह्मविदांतदनुभवएव

कृष्णवत्सैरसंख्यातैर्यूथीकृत्यस्ववत्सकान् चारयंतोऽर्भलीलाभिर्विजह्रुस्तत्रतत्रह ३ फलप्रवालस्तवकसुमनःपिच्छधातुभिः काचगुंजामणिस्वर्णभूषिताअप्यभूषयन् ४ मुष्णंतोऽन्योन्यशिक्यादीन्ज्ञातानाराच्चचिक्षिपुः तत्रत्याश्चपुनर्दूराद्धसंतश्चपुनर्ददुः ५ यदिदूरंगतःकृष्णोवनशोभेक्षणायतम् अहंपूर्वमहंपूर्वमितिसंस्पृश्यरेमिरे ६ केचिद्वेणून्वादयंतोध्मांतःशृंगाणिकेचन केचिद्भृंगैःप्रगायंतःकूजंतःकोकिलैःपरे ७ विच्छायाभिःप्रधावंतोगच्छंतःसाधुहंसकैः बकैरुपविशंतश्चनृत्यंतश्चकलापिभिः ८ विकर्षंतःकीशबालानारोहंतश्चतैर्द्रुमान् विकुर्वंतश्चतैःसाकंप्लवंतश्चपलाशिषु ९ साकंभेकैर्विलंघंतःसरित्प्रस्रवसंप्लुताः विहसंतःप्रतिच्छायाःशपंतश्चप्रतिस्वनान् १० इत्थंसतांब्रह्मसुखानुभूत्यादास्यंगतानांपरदैवतेन मायाश्रितानां नरदारकेणसाकंविजह्रुःकृतपुण्यपुंजाः ११ यत्पादपांसुर्बहुजन्मकृच्छ्रतोधृतात्मभिर्योगिभिरप्यलभ्यः सएवयद्दृग्विषयःस्वयंस्थितःकिंवर्ण्यतेदिष्टमतोव्रजौकसाम् १२ अथाघनामाऽभ्यपतन्महासुरस्तेषांसुखक्रीडनवीक्षणाक्षमः नित्यंयदंतर्निजजीवितेप्सुभिःपीतामृतैरप्यमरैःप्रतीक्ष्यते १३ दृष्ट्वाऽर्भकान्कृष्णमुखानघासुरःकंसानुशिष्टःसबकीबकानुजः अयंतुमेसोदरनाशकृत्तयोर्द्वयोर्ममैनंसबलंहनिष्ये १४ एतेयदामत्सुहृदोस्तिलापःकृतास्तदानष्टसमाव्रजौकसः प्राणेगतेवर्ष्मसुकानुचिंताप्रजाऽसवःप्राणभृतोहियेते १५

भक्तानामतिगौरवेणभजनं एतेतुतेनसहसख्येनविजह्रुः अहोभाग्यमितिभावः ११ बहुजन्मभिःकृच्छ्रेणधृतआत्मामनोयैस्तैरपि १२ सुखक्रीडनवीक्षणेनाक्षमायस्यसः कथंभूतः यस्यअंतरंतरंछिद्रंपीतामृतैरपिततोमृत्युभीतैःअमरैरपिप्रतीक्ष्यते कथमस्यमरिष्यतिकदावेतियद्वा कथंभूतंसुखक्रीडनं यत्अंतर्हृदयेअमरैःप्रतीक्ष्यतेविचिंत्यते पीतामृतैरपिपुनर्निजजीवितेप्सुभिः अयंभावः नामृतपानमात्रेणजीवनंसफलंभवति किंतुभगवल्लीलाऽनुस्मरणेनेतितदेवनित्यमंतश्चिंत्यतइति १३ कृष्णप्रमुखानर्भकान्दृष्ट्वासइतिव्यवस्यनिश्चित्यआजगरंवपुर्धृत्वातेषांग्रसनाशयापथिव्यशेतेतितृतीयेनान्वयः कंसेनानुशिष्टःप्रहितः बकीपूतनाकथंव्यवस्यतदाह अयंत्विति सार्धेन ममतयोर्द्वयोःसोदरयोःस्थानेएनंकृष्णंसबलंससैन्यंवत्सगोपालसहितंहनिष्यामि १४ ननुतथापिव्रजस्थास्त्ववशिष्येरन्नित्याह एतइति तिलापःकृताःतिलोदकतयाकल्पिताः वर्ष्मसुदेहेषु प्रजाएवासवोयेषांतेतथा १५

सयोजनायामंयोजनप्रमाणेनदैर्घ्येणयुक्तञ्चतन्महाद्रिपीवरञ्चव्यात्तमसारितगुहातुल्यमाननंयस्मिंस्तत् १६ अद्भुतमितियदुक्तंतद्दर्शयितुंविशिनष्टि धरायाम धरोष्ठोयस्यस जलदेपूत्तरोष्ठोयस्यस दर्याविवाननस्यान्तोसृक्किणीयस्यस गिरिशृङ्गाणीवदंष्ट्रायस्यस ध्वान्तवदन्तरास्यंयस्यस वितताध्ववज्जिह्वायस्य स परुषानिलवच्छ्वासोयस्यस दववदीक्षणयोरुष्मा दावदृष्टिरित्यर्थः परुषानिलश्वासश्चासौदवेक्षणोष्णश्चतया १७ वस्तुतोऽजगरमेवव्यात्ततुण्डत्वात् वृन्दावनस्यश्री सर्पदेहेतिभ्रान्त्यामत्वाविपरीतव्यात्ताजगरतुण्डसादृश्येनोत्प्रेक्षितवन्त १८ उत्प्रेक्षामेवप्रश्नोत्तराभ्यामाह अहोइति सत्त्वकूटसत्त्वाभासमि दनवा तत्राप्यस्मत्संग्रसनायव्यात्तयद्व्यालतुण्डतद्वदाचरतिनवानवा १९ निश्चिन्वन्तस्तथैवेत्याहुः सत्यमिति अर्ककरैरारक्तंघनमुत्तरोष्ठवत् पश्यतनस्यघनस्य प्रतिच्छायया अरुणरोधस्थलअधरोष्ठवत्पश्यतेतिसर्वत्रान्वेति २० सृक्किभ्याम् ओष्ठप्रान्ताभ्यांप्रतिस्पर्द्धेनेतुल्यतयावर्तेते नगोदरेगिरिदर्यौ एतास्तुगश्च

इत्थंव्यवस्याजगरंबृहद्वपुः सयोजनायाममहाद्रिपीवरम् धृत्वाऽद्भुतंव्यात्तगुहाननंतदापथिव्यशेतग्रसनाशयाखलः १६ धराधरोष्ठोज लदोत्तरोष्ठोदर्याननान्तोगिरिशृङ्गदंष्ट्रः ध्वान्तान्तरास्योवितताध्वजिह्वः परुषानिलश्वासदवेक्षणोष्णः १७ दृष्ट्वातंतादृशंसर्वेमत्वावृ न्दावनश्रियम् व्यात्ताजगरतुण्डेनह्युत्प्रेक्षन्तेस्मलीलया १८ अहोमित्राणिगदतसत्त्वकूटंपुरःस्थितम् अस्मत्संग्रसनव्यात्तव्याल तुण्डायतेनवा १९ सत्यमर्ककरारक्तमुत्तराहनुवद्घनम् अधराहनुवद्रोधस्तत्प्रतिच्छाययाऽरुणम् २० प्रतिस्पर्धेतेसृक्किभ्यांसव्या सव्येनगोदरे तुङ्गशृङ्गालयोऽप्येतास्तद्दंष्ट्राभिश्चपश्यत २१ आस्तृतायाममार्गोऽयंरसनांप्रतिगर्जति एषामन्तर्गतंध्वान्तमेतदप्य न्तराननम् २२ दावोष्णखरवातोऽयंश्वासवद्भातिपश्यत तद्दग्धसत्त्वदुर्गन्धोऽप्यन्तरामिषगन्धवत् २३ अस्मान्किमत्रग्रसिता निविष्टानयंतथाचेद्बकवद्विनङ्क्ष्यति क्षणादनेनेतिबकार्युशन्मुखंवीक्ष्योद्धसन्तः करताडनैर्ययुः २४ इत्थंमिथोऽतथ्यमतज्ज्ञभा षितंश्रुत्वाविचिन्त्येत्यमृषामृषायते रक्षोविदित्वाऽखिलभूतहृत्स्थितःस्वानांनिरोद्धुंभगवान्मनोदधे २५ तावत्प्रविष्टास्त्वसुरोद रान्तरंपरंनगीर्णाः शिशवःसवत्साः प्रतीक्षमाणेनबकारिवेशनंहतस्वकान्तस्मरणेनरक्षसा २६ तान्वीक्ष्यकृष्णः सकलाभयप्र दोह्यनन्यनाथान्स्वकरादवच्युतान् दीनांश्चमृत्योर्जठराग्निघासान्घृणाऽर्दितोदिष्टकृतेनविस्मितः २७

गालयः तस्यदंष्ट्राभिःस्पर्द्ध माना २१ आस्तृतायाममार्गं विस्तृतोदैर्घ्ययुक्तमार्गं प्रतिगर्जतिप्रतिस्पर्द्धते एषांशृङ्गाणामन्तर्गतमध्यगतध्वान्तमेतत् अन्तराननमाननस्यमध्यंप्रतिगर्जति २२ दा वेनोष्णःखरोवातोऽयम् तेनदावाग्निनादग्धानांसत्त्वानांयोदुर्गन्धः सएवसर्पान्तर्गतामिषगन्धवद्भाति २३ एवंसन्तमेवाजगरमन्यथोत्प्रेक्ष्यनिर्भयायमु किंग्र सिताग्रसिष्यति अनेनश्रीकृष्णेनहन्तेतिबकारेरुशत्कमनीयंमुखम् २४ अमृषावस्तुतःसर्पवपुरसुरएवमृषायतेस्वानांसर्पसादृश्यगोचरत्वेनप्रतीयतइति तान्निरोद्धुंवारयितुंयावन्मनोदधेतावत्प्रविष्टाइत्युत्तरेणान्वयः २५ तावत्प्रविष्टाएवकेवलंनतुतेनगीर्णाःगिलिता जीर्णाइतिपाठेऽपिसएवार्थः कथंभूतेनहतस्वा न्रूपोरन्तःस्मरतीतिमनुध्यायतीतितथातेन अतएवबकारेःश्रीकृष्णस्यप्रवेशंप्रतीक्षमाणेन २६ स्वकरात्स्वच्युतान्विनिःसृतान्विस्मितःसन्कृष्णःकिमत्रेत्यादिविचिन्तयन्तौ पायप्रलास्त्वपमप्यविशादित्यन्वयः २७

कथंचिन्नित्यअस्यजीवनममीषांचविहिंसनमितिद्वयंचैनिश्चितंकथंनस्यादिति २८ घनच्छदामेघांतरिताःकौणपाःकुणपाशिनोराक्षसाः कौणपोनिर्ऋतिस्तदीयाइति वा २९ चूर्णीकर्त्तुमिच्छोःतस्यगलेआदावेवतरसावव्रृधेअवर्द्धत ३० निरुद्धोमुखादीनांमार्गभूतःकंठोयस्यास्तितस्यउद्गीर्णदृष्टेर्बहिर्निर्गतलोचनस्यअंतरंगेदेहम ध्येपूर्णःपरिभृतःमूर्द्धन्मूर्धानंब्रह्मरंध्रंनिर्भिद्यबहिर्विनिर्गतइति ३१ प्राणेषुइंद्रियेषुस्वयाऽमृतवर्षिण्यादृष्ट्यैव ३२ अहिदेहेस्थितमद्भुतस्वमयंज्योतिर्निर्गत्य खेऽवस्थितंतस्मिन्ईशेविवेश ३३ स्वकृतःस्वकार्यकृतःश्रीकृष्णस्याहर्णमकृत पूजामकुर्वन् सुगाःसुष्ठुगायंतीतिगंधर्वादयः ३४ तेषांयान्यद्भुतस्तोत्रादीनितैर्याने कोत्सवायेमंगलस्वनास्तान् स्वधाम्नःअंतिसमीपेश्रुत्वाअजोब्रह्माअचिरादागतःईशस्यश्रीकृष्णस्यमहिममहिमानंदृष्ट्वाविस्मयंप्रापेति ३५ बहुतिथंबहुकालम्

कृत्यंकिमत्रास्यखलस्यजीवनंनवाअमीषांचसतांविहिंसनम् द्वयंकथंस्यादितिसंविचिंत्यतज्ज्ञात्वाऽविशत्तुंडमशेषदृग्घरिः २८ तदाघन च्छदादेवाभयाद्धाहेतिचुक्रुशुः जहृषुर्येचकंसाद्याःकौणपास्त्वघबांधवाः २९ तच्छ्रुत्वाभगवान्कृष्णस्त्वव्ययःसार्भवत्सकम् चूर्णीचि कीर्षोरात्मानंतरसाववृधेगले ३० ततोऽतिकायस्यनिरुद्धमार्गिणोह्युद्गीर्णदृष्टेर्भ्रमतस्त्वितस्ततः पूर्णोऽन्तरंगेपवनोनिरुद्धोमूर्द्धन्विनि र्भिद्यविनिर्गतोबहिः ३१ तेनैवसर्वेषुबहिर्गतेषुप्राणेषुवत्सान्सुहृदःपरेतान् दृष्ट्यास्वयोत्थाप्यतदन्वितःपुनर्वक्त्रान्मुकुंदोभगवान्वि निर्ययौ ३२ पीनाहिभोगोत्थितमद्भुतंमहज्ज्योतिःस्वधाम्नाज्वलयद्दिशोदश प्रतीक्ष्यखेऽवस्थितमीशनिर्गमंविवेशतस्मिन्मिषतांदिवौ कसाम् ३३ ततोऽतिहृष्टाःस्वकृतोऽकृतार्हणंपुष्पैःसुराअप्सरसश्चनर्त्तनैः गीतैःसुगावाद्यधराश्चवाद्यकैःस्तवैश्चविप्राजयनिःस्वनैर्गणाः ३४ तदद्भुतस्तोत्रसुवाद्यगीतिकाजयादिनैकोत्सवमंगलस्वनान् श्रुत्वास्वधाम्नोऽन्त्यजआगतोऽचिराद्दृष्ट्वामहीशस्यजगामविस्मयम् ३५ राजन्नाजगरंचर्मशुष्कंवृंदावनेऽद्भुतम् व्रजौकसांबहुतिथंबभूवाक्रीडगह्वरम् ३६ एतत्कौमारजंकर्महरेरात्माहिमोक्षणम् मृत्योःपौगं डकेबालादृष्ट्वोचुर्विस्मिताव्रजे ३७ नैतद्विचित्रंमनुजार्भमायिनःपरावराणांपरमस्यवेधसः अघोऽपियत्स्पर्शनधौतपातकःप्रापात्मसाम्यंत्व सतांसुदुर्लभम् ३८ सकृद्यदंगप्रतिमांतराहितामनोमयीभागवतींददौगतिम् सएवनित्यात्मसुखानुभूत्यभिव्युदस्तमायोऽन्तर्गतोहिकिंपु नः ३९ सूतउवाच इत्थंद्विजायादवदेवदत्तःश्रुत्वास्वरातुश्चरितंविचित्रम् पप्रच्छभूयोऽपितदेवपुण्यंवैयासकिंयन्निगृहीतचेताः ४०

आक्रीडगह्वरंक्रीडार्थंमहाबिलम् ३६ अन्यच्चातिचित्रंवृत्तमित्याह एतदिति कौमारंपंचमाब्दांतंपौगंडंदशमावधि कैशोरमापंचदशाद्यौवनंतुततःपरम् हरेः कौमारजंपंचमाब्दकृतंकर्मतदेवदृष्ट्वापौगंडकेषष्ठेऽब्देबालाअद्यैतद्वृत्तमित्यूचुः किंतत्कर्म मृत्योःसकाशादात्मनामहेश्चमोक्षणम् आत्मनांप्रसिद्धान्मृत्योःअहे स्तुसंसारलक्षणात् अघासुरस्यज्योतिषःश्रीकृष्णेप्रवेशमपितदादृष्ट्वाकथितवंतइत्यर्थः ३७ नैतद्विचित्रमिति किंतदित्यपेक्षायामाह अघोऽपीति आत्मसा- म्यंस्वसमानरूपताम् ३८ यस्यांगमूर्त्तिस्तस्यप्रतिमाप्रतिकृतिःतत्रापिकेवलंमनोमयी साऽपिबलादंतराहितासतीभागवतींगतिंददौ प्रह्लादादिभ्यःसएवसा क्षात्स्वयमंतर्गतःकिंपुनःनित्याचासावात्मसुखानुभूतिश्चतयाऽभितोव्युदस्तामायायेनसः ३९ येनश्रवणेननिगृहीतंवशीकृतंचेतोयस्यसः ४०

कालांतरेकौमारेकृतंपौगंडेकेकथंज्ञातंलोकैरित्यर्थः ४१ ४२ ४३ तेनयस्मारितोऽनंतं तेनहृतानिअखिलेंद्रियाणियस्यसः तथाभूतोऽपिकथंचिल्लब्धबहिर्दृष्टि हेभागवतोत्तमोत्तम हेशौनक ४४ इतिदशमेटीकायांद्वादशोऽध्यायः १२ त्रयोदशेहरद्ब्रह्मावत्सान्पालांश्चमायया तदातत्सर्वरूपोऽव्यत्कृष्णः पूर्ववदाचरत् १ नूतनयसिनव्यवत्करोषि १ तथाहिसारभृतांसारग्राहिणामयंनिसर्गः स्वभावः कोऽसौअच्युतस्यवार्तापिप्रतिक्षणंसाधुनव्यवद्भवतीतियत्तत्सर्वि दानाकर्णेनाक्षिप्ताः कामिन्यावार्ताइवकथंभूतानामपिसतां याअच्युतवार्तेवअर्थोयेषांतानितेषांवाणीश्रुतिचेतांसियेषांतथाभूतानामपि २ ३ ४ भोजनविधानायपुलिनंस्तौति अहोइति स्वीयानांकेलीनांसंपदोविद्यंतेयस्मिन्तत् किंच स्फुटंहृद्यं सत्सरः सरोजवाहुल्येनोपचारतः सरएवयस्य सद्गंधम्

राजोवाच ब्रह्मन्कालांतरकृतंतत्कालीनंकथंभवेत् यत्कौमारेहरिकृतंजगुः पौगंडकेऽर्भकाः ४१ तद्ब्रूहिमेमहायोगिन्परंकौतूहलंगुरो नूनमेतद्धरेरेवमायाभवतिनान्यथा ४२ वयंधन्यतमालोकेगुरोऽपिक्षत्रबंधवः यत्पिबामोमुहुस्त्वत्तः पुण्यंकृष्णकथामृतम् ४३ सूतउवाच इत्थंस्मपृष्टः सतुबादरायणिस्तत्स्मारितानंतहृताखिलेंद्रियः कृच्छ्रात्पुनर्लब्धबहिर्दृशिः शनैः प्रत्याहतंभागवतोत्तमोत्तम ४४ इतिश्रीभाग॰ महा॰ दश॰ द्वादशोऽध्यायः १२ श्रीशुकउवाच साधुपृष्टंमहाभागत्वयाभागवतोत्तम यन्नूतनयसीशस्यशृण्वन्नपिकथांमुहुः १ सतामयंसारभृतांनिसर्गोयदर्थवाणीश्रुतिचेतसामपि प्रतिक्षणंनव्यवदच्युतस्ययत्स्त्रियाविटानामिवसाधुवार्ता २ शृणुष्वावहितोराजन्नपिगुह्यंवदामिते ब्रूयुःस्निग्धस्यशिष्यस्यगुरवोगुह्यमप्युत ३ तथाऽघवदनान्मृत्योरक्षित्वावत्सपालकान् सरित्पुलिनमानीयभगवानिदमब्रवीत् ४ अहोऽतिरम्यंपुलिनंवयस्याः स्वकेलिसंपन्मृदुलाच्छवालुकम् स्फुटत्सरोगंधहृतालिपत्रिकध्वनिप्रतिध्वानलसद्द्रुमाकुलम् ५ अत्रभोक्तव्यमस्माभिर्दिवारूढंक्षुधाऽर्दिताः वत्साः समीपेऽपः पीत्वाचरंतुशनकैस्तृणम् ६ तथेतिपाययित्वाऽर्भावत्सानारुध्यशाद्वले मुक्त्वाशिक्यानिबुभुजुः समंभगवतामुदा ७ कृष्णस्यविष्वक्पुरुराजिमंडलैरभ्याननाः फुल्लदृशोव्रजार्भकाः सहोपविष्टाविपिनेविरेजुश्छदायथाऽम्भोरुहकर्णिकायाः ८ केचित्पुष्पैर्दलैःकेचित्पल्लवैरंकुरैःफलैः शिग्भिस्त्वग्भिर्दृषद्भिश्चबुभुजुःकृतभाजनाः ९ सर्वेमिथोदर्शयंतः स्वस्वभोज्यरुचिंपृथक् हसंतोहासयंतश्चाभ्यवजह्रुःसहेश्वराः १०

तस्यगंधः तेनहृताः आकृष्टाः अलयः पत्रिणश्चयेतेषांकेउदके ध्वनयस्तेषांप्रतिध्वानाः तैर्लसंतोद्रुमास्तैराकुलंव्याप्तम् ५ दिवारूढंवेलाऽतीतेत्यर्थः ६ आरुध्यसंरुध्य शाद्वलेहरिततृणदेशे ७ तदातेविरेजुः कृष्णस्यविष्वक्परितःपुरुराजिमंडलैर्बहुभिःपंक्तिमंडलैः सहनैरंतर्येणोपविष्टाः श्रीकृष्णाभिमुखान्याननानियेषांते फुल्लदृशः विकसितनयनाः कमलकर्णिकायाः परितःपत्राणियथेति ८ पुष्पैस्तद्दलैः अन्यैश्चपत्रैः कृतानिभाजनानियैस्ते ९ रुचिंस्वादविशेषम् अभ्यवजह्रुर्बुभुजिरे सहेश्वराः श्रीकृष्णसहिताः १०

यज्ञभुगपितेषुबुभुजे बालानामिवकेलिर्यस्यसः तदाह उदरवस्त्रयोर्मध्येवेणुंबिभ्रदधदितिसर्वत्रसंबध्यते वामइतिकक्षपाण्योर्विशेषणम् मसृणंस्निग्धंदध्यो
दनकवलम् तदुचितानिबिल्वादिफलानिअंगुलीसंधिषु कर्णिकेवसर्वाभिमुखोमध्येतिष्ठन्स्वस्यपरितउपविष्टान्सुहृदः स्वैर्नर्मभिः परिहासवाक्यैः स्वर्गे
लोकेस्वर्गवासिनिजनेमिषतिआश्चर्येणपश्यतिसतिलोकेजनानांमध्येबुभुजे ११ १२ भीभयम् भयहेतुभ्योभयमस्यअपास्य यद्वा अस्यविश्वस्याभियोऽपिभ
यंयः श्रीकृष्णः आशाद्भोजनात् अस्मिन्पादेऽक्षराधिक्यमार्षम् १३ अद्रिषुतद्दरीषुकुंजेषुलतादिपिहितोदरविवरेषु गह्वरेषुसंकटस्थानेषु १४ अंभोजन्मनःपद्मा
ज्जनिर्यस्यसः ब्रह्मातदंतरेतस्मिन्नवसरेगतः आगतः तच्छिद्रंप्राप्तोवा अन्यदपिमहित्वमहिमानंद्रष्टुंतस्यवत्सानितःस्थानाद्वत्सपांश्चान्यत्रनीत्वास्वयंतिरोबभू
व भगवतः श्रीकृष्णस्य १५ उभावपिवत्सान्वत्सपांश्चविचिकाय अन्वीक्षितवान् १६ विधिकृतंब्रह्मणाकृतम् १७ उभयायितवत्सतत्पालरूपेणवर्तमान

बिभ्रद्वेणुंजठरपटयोः शृंगवेत्रेचकक्षेवामेपाणौमसृणकवलंतत्फलान्यंगुलीषु तिष्ठन्मध्येस्वपरिसुहृदोहासयन्नर्मभिः स्वैः स्वर्गेलो
केमिषतिबुभुजेयज्ञभुग्बालकेलिः ११ भारतैवंवत्सपेषुभुंजानेष्वच्युतात्मसु वत्सास्त्वंतर्वनेदूरंविविशुस्तृणलोभिताः १२ तान्दृ
ष्ट्वाभयसंत्रस्तानूचेकृष्णोऽस्यभीभयम् मित्राण्याशान्माविरमतेहानेष्येवत्सकानहम् १३ इत्युक्त्वाऽद्रिदरीकुंजगह्वरेष्वात्मव
त्सकान् विचिन्वन्भगवान्कृष्णः सपाणिकवलोययौ १४ अंभोजन्मजनिस्तदंतरगतोमायाऽर्भकस्येशितुर्द्रष्टुंमंजुमहित्वमन्यद
पितद्वत्सानितोवत्सपान् नीत्वाऽन्यत्रकुरूद्वहांतरदधात्खेऽवस्थितोयः पुराद्दृष्ट्वाऽघासुरमोक्षणंप्रभवतः प्राप्तः परंविस्मयम् १५
ततोवत्सानदृष्ट्वैत्यपुलिनेऽपिचवत्सपान् उभावपिवनेकृष्णोविचिकायसमंततः १६ क्वाप्यदृष्ट्वाऽन्तर्विपिनेवत्सान्पालांश्चवि
श्ववित् सर्वंविधिकृतंकृष्णः सहसाऽवजगामह १७ ततःकृष्णोमुदंकर्तुंतन्मातॄणांचकस्यच उभयायितमात्मानंचक्रेविश्वकृ
दीश्वरः १८ यावद्वत्सपवत्सकाल्पकवपुर्यावत्कराङ्घ्र्यादिकंयावद्यष्टिविषाणवेणुदलशिग्यावद्विभूषांबरम् यावच्छीलगुणाभि
धाकृतिवयोयावद्विहारादिकंसर्वंविष्णुमयंगिरोऽगवदजः सर्वस्वरूपोबभौ १९ स्वयमात्मात्मगोवत्सान्प्रतिवार्यात्मवत्सपैः
क्रीडन्नात्मविहारैश्चसर्वात्माप्राविशद्व्रजम् २० तत्तद्वत्सान्पृथग्नीत्वातत्तद्गोष्ठेनिवेश्यसः तत्तदात्माऽभवद्राजंस्तत्तत्सद्मप्रवि
ष्टवान् २१

मित्यर्थः अयंभावः यदितूष्णीमासेतर्हितन्मातॄणांविषादःस्यात् यदिचतानेवानयिष्यामितर्हिब्रह्मणोमोहोनस्यादितितदुभयप्रीतयेतथा
चक्रेइति १८ तदेवदर्शयति यावदिति वत्सपानांवत्सकानांचाल्पकवपुःप्रमाणमनतिक्रम्य एवमुपर्यपियोज्यम् यद्वा यावद्वत्सपादिवपुस्तावत्सर्वस्वरू
पोऽजः कृष्णोबभावित्यर्थः उत्तरत्राप्येवंसर्वंविष्णुमयंजगदितिप्रसिद्धायागीः तस्याअगवत् साकारेवार्थस्वरूपेणप्रत्यक्षायथातथाबभूवेत्यर्थः १९ एवंसर्वा
त्मासन् व्रजंप्राविशत् कथंस्वयमात्मैवप्रयोजकआत्मरूपान्गोवत्सानितिकर्मापिस्वयमेवेत्युक्तम् आत्मरूपैर्वत्सपैः प्रतिवार्यप्रयोज्यकर्ताऽपिस्वयमेवात्म
विहारैः क्रीडन्नितिक्रियाऽपिकारकाण्यपिस्वयमेवेत्यर्थः २० तत्तदात्मातत्तद्गोपबालरूपोऽभवत् ततस्तत्तत्सद्मप्रविष्टः २१ ६९ ६९

गोपिकामोहमाह तन्मातर इति तन्मातरो वेणुरवेण त्वरया उत्थिताः सत्यः सुतान् मत्वा परं ब्रह्मैव दोर्भिः उद्धृत्य उत्थाप्य स्नेहेन स्नुतं स्तन्यपयः सुधासवं पय एव सुधा तद्वत् स्वादु आसवं च तम् अपाययामासुरित्यर्थः २२ एवं यामयमेन तत्तत्कालक्रीडानियमेन सायं गतः मास स्वाचरितैः स्वस्याचरितैः शोभनैराचरितैर्वा मातॄः प्रहर्षयन् ततस्ताभिरुन्मर्दनादिभिरुपलालित इति २३ गवां मोहनमाह गाव इति परिहूता आहूताश्च ते संगताश्च तान् २४ एतावत्तु वैषम्यं कृष्णस्यापि द्विवारमासीदित्याह गोगोपीनामिति गवां गोपीनां चास्मिन् कृष्णे मातृता उपलालनादिरूपा पुरोवदेवासीत् किंतु स्नेहर्द्धिकां विना स्नेहाधिक्यं विद्यमानो विशेष इत्यर्थः आसु गोगोपीषु हरेस्तोकता च बालभावना अपि पूर्ववदेवासीत् किंतु मायया विना ममेयं माता अहमस्याः पुत्र इति मोहं विना इत्यर्थः २५ स्नेहर्द्धिमेव दर्शयति व्रजौकसामिति यथा कृष्णे यशोदानन्दनेऽस्य स्वपुत्रेष्वपि स्नेहाधिक्यं पूर्वमासीत् इदानीं स्वतोकेष्वपि तथैवाभवदित्यर्थः आ अब्दं यावत्संवत्सरं

तन्मातरो वेणुरवत्वरोत्थिता उद्धृत्य दोर्भिः परिरभ्य निर्भरम् स्नेहस्नुतस्तन्यपयः सुधासवं मत्वा परं ब्रह्म सुतानपाययन् २२ ततो नृपोन्मर्द्दनमज्जलेपनालंकाररक्षातिलकाशनादिभिः सलालितः स्वाचरितैः प्रहर्षयन् सायं गतो यामयमेन माधवः २३ गावस्ततो गोष्ठमुपेत्य सत्वरं हुंकारघोषैः परिहूतसंगतान् स्वकान् स्वकान् वत्सतरानपाययन् मुहुर्लिहन्त्यः स्रवदौधसं पयः २४ गोगोपीनां मातृताऽस्मिन्नासीत् स्नेहर्द्धिकां विना पुरोवदास्वपि हरेस्तोकता मायया विना २५ व्रजौकसां स्वतोकेषु स्नेहवल्ल्याऽब्दमन्वहम् शनैर्निःसीम ववृधे यथा कृष्णे त्वपूर्ववत् २६ इत्थमात्मात्मनात्मानं वत्सपालमिषेण सः पालयन् वत्सपो वर्षं चिक्रीडे वनगोष्ठयोः २७ एकदा चारयन् वत्सान् सरामो वनमाविशत् पञ्चषासु त्रियामासु हायनापूरणीष्वजः २८ ततो विदूराच्चरतो गावो वत्सानुपव्रजम् गोवर्द्धनाद्रिशिरसि चरन्त्यो ददृशुस्तृणम् २९ दृष्ट्वाऽथ तत्स्नेहवशोऽस्मृतात्मा स गोव्रजोऽत्यात्मपदुर्गमार्गः द्विपात्ककुद्ग्रीव उदास्यपुच्छोऽगाद्धुंकृतैरास्रुपया जवेन ३० समेत्य गावोऽधो वत्सान् वत्सवत्योऽप्यपाययन् गिलन्त्य इव चांगानि लिहन्त्यः स्वौधसं पयः ३१

रनि सीम यथा भवति २६ एवमात्मा श्रीकृष्णः वत्सपो भूत्वा तन्मायाधिवत्सानां पालानां च मिषेण आत्मानमात्मना पालयन् क्रीडितवानित्यर्थः २७ एतावत्पर्यन्तं रामस्यापि मोह एवासीत् संवत्सरान्ते तु कथंचिज्ज्ञातवानिति दर्शयन्नाह एकदेति पञ्चषासु पञ्चसु षट्सु वा रात्रिषु हायनस्यापूरणीषु पूरकत्वेनाऽवशिष्टास्वित्यर्थः २८ ततो दूरतर एव गोवर्द्धनशिखरे चरन्त्यो गावो व्रजसमीपे चरतो वत्सान् ददृशुः २९ तदा स गोव्रजः गवां कलापः यतस्तत्स्नेहवशः तेषां वत्सानां स्नेहेनाकृष्टः अत एव न स्मृत आत्मा येन सः जवेन उपव्रजमगात् कथंभूतः अत्यात्मपदुर्गमार्गः अतिक्रान्त आत्मपान् गोपान् आत्मनः पालकान् सोऽत्यात्मपः तथा दुर्गो दुर्गमो मार्गो यस्य सः स च स च तथा युक्ताभ्यामपि द्वाभ्यां धावन् द्विपादिव प्रतीयमानः ककुद् आकुञ्चिता ग्रीवा यस्य सः उदास्यपुच्छः उन्नमितान्यास्यानि पुच्छानि च येन सः आस्रुपयाः स्रवत् स्रवति पयांसि यस्य सः आस्रुपया इत्यपि पाठे स एवार्थः गोव्रज इत्यनेन वृषभादयोऽप्यगुरित्युक्तम् ३० तत्र विशेषतो धेनूनां चेष्टितमाह समेत्येति गोवर्द्धनस्याधः वत्सवत्यः पुनः प्रसूता अपि ३१

रामेण दृष्टं यत्स्नेहेषु गवां स्नेहातिशयमुक्त्वा गोपानामपि दर्शयितुमाह गोपा इति तासां गवां रोधने य आयासः तस्य मौघ्येन मोघत्वेन लज्जया सह उरुमन्युना दुर्गमार्गजनित क्लेशेन चाभ्येत्य गोवत्सैः सह सुतान् ददृशुः ३२ ततश्च तेषामीक्षणेनोद्गतो यः प्रेमरसस्तस्मिन्नाप्लुता निमग्ना आशया येषां ते लज्जामन्युरुच्चैस्तानपि ताडयितु मागताः संतो अपगतमन्यवः प्रत्युत जातोऽनुरागो येषां ते मूर्ध्नि घ्राणैरवघ्राणैः परमां मुदमवापुः ३३ कृच्छ्रात्ततोऽपगता निवृत्ताः तेषां सुतानामनुस्मृत्या उद्गच्छंति अश्रूणि येषां ते ३४ प्रेमर्द्धेः औत्कंठ्यमतिशयम् मुक्तस्तनेष्वपत्येषु वीक्ष्य हेतुमजानन् अचिंतयत् ३५ चिंतामेवाह किमेतदिति द्वाभ्याम् वासुदेवे यथा पुरा प्रेम तथास्वतोकेष्वपि व्रजस्य प्रेम वर्धते किमेतदद्भुतमिति किंच सात्मनः मत्सहितस्य व्रजस्य मम तेषु प्रेमकारणं किमिति भावः ३६ केयं माया देवानां वा नराणां वा असुराणां वा कुतो वा कस्मात्प्रयुक्ता तत्रान्यमाया न संभवति यतो ममापि मोहो वर्त्तते अतः प्रायशो मत्स्वामिनः श्रीकृष्णस्यैव मायेयमस्त्विति संभावयति

गोपास्तद्रोधनायासमौघ्यलज्जोरुमन्युना दुर्गाध्वकृच्छ्रतोऽभ्येत्य गोवत्सैर्ददृशुः सुतान् ३२ तदीक्षणोत्प्रेमरसाप्लुताशया जातानुरागा
गतमन्यवोऽर्भकान् उदुह्य दोर्भिः परिरभ्य मूर्द्धनि घ्राणैरवापुः परमां मुदं ते ३३ ततः प्रवयसो गोपास्तोकाश्लेषसुनिर्वृताः कृच्छ्रा
च्छनैरपगतास्तदनुस्मृत्युदश्रवः ३४ व्रजस्य रामः प्रेमर्द्धेर्वीक्ष्यौत्कंठ्यमनुक्षणम् मुक्तस्तनेष्वपत्येष्वप्यहेतुविदचिंतयत् ३५
किमेतदद्भुतमिव वासुदेवेऽखिलात्मनि व्रजस्य सात्मनस्तोकेष्वपूर्वं प्रेम वर्धते ३६ केयं वा कुत आयाता दैवी वा नार्युतासुरी
प्रायो मायाऽस्तु मे भर्तुर्नान्या मेऽपि विमोहिनी ३७ इति संचिंत्य दाशार्हो वत्सान् सवयसानपि सर्वानाचष्ट वैकुंठं चक्षुषा वयुने
नसः ३८ नैते सुरेशा ऋषयो न चैते त्वमेव भासीश भिदाश्रयेऽपि सर्वं पृथक्त्वं निगमात्कथं वदेत्युक्तेन वृत्तं प्रभुणा बलोऽवैत् ३९
तावदेत्यात्मभूरात्ममानेन त्रुट्यनेहसा पुरोवदब्दं क्रीडंतं ददृशे सकलं हरिम् ४० यावंतो गोकुले बालाः सवत्साः सर्व एव हि माया
शये शयाना मे नाद्यापि पुनरुत्थिताः ४१ इत एतेऽत्र कुत्रत्या मन्मायामोहितेतरे तावंत एव तत्राब्दं क्रीडंतो विष्णुना समम् ४२
एवमेतेषु भेदेषु चिरं ध्यात्वा स आत्मनि सत्याः के कतरे नेति ज्ञातुं नेष्टे कथंचन ४३ एवं संमोहयन्विष्णुं विमोहं विश्वमोहनम् स्वयैव
मायया ऽजोऽपि स्वयमेव विमोहितः ४४

३७ सवयसान् सखीनपि वयुनेन ज्ञानमयेन चक्षुषा वैकुंठं श्रीकृष्णमेवापश्यत् ३८ एवं कृष्णारूपान् सामान्यतो ज्ञात्वा रूपं दृष्ट्वा कृष्णापदेशेन विशेषतो ज्ञातवानित्याह नैत इति अयमर्थः पाल्यमानास्तावद्वत्सा ऋषीणामंशाः पालाश्च देवानामंशा इति तावदहं वेद्मि इदानीं तु न तथा किंतु अस्मिन् भिदाश्रयेऽपि त्वमेव भासि अतस्त्वं सर्वं पृथग्विविच्य कथं वृत्तमिति वदेत्युक्तेन प्रभुणा वत्सान्निगमात् संक्षेपत एवोक्तं वृत्तं बलोऽवैत् विदितवानित्यर्थः ३९ ततः किं वृत्तमित्यपेक्षायामाह तावदिति वर्षे जाते आत्मनो मानेन त्रुट्यनेहसा त्रुटिमात्रेण कालेन सकलं सानुचरं हरिं ददर्श ४० दृष्ट्वा च व्यतर्कयदित्याह यावंत इति द्वाभ्याम् मे मायाशये मायातल्पे ४१ मन्मायामोहितेभ्य इतरे कुत्रत्याः ४२ इति वितर्कयन्नमुह्यदित्याह एवमिति द्वाभ्याम् एवमेतेषु भेदेषु चिरं ध्यात्वा स आत्मभूरिति पाठः ४३ ४४

ननुमायायाम्पस्यतस्यकुतोमोहइत्यतआह तम्यामिति महामायिनिभगवतिअन्यमायायाःआवरणविक्षेपकत्वाभावेदृष्टांतद्वयमाह तम्यातमिस्त्रयाराव्यानैहारहिम
कणमभवतमइव तद्धितार्थोपसर्जनस्यापितमसोनैहारमितिविशेषणछादसम् तत्तमोयथापृथगावरणनकरोति किंतु तत्रैवलीयते यथाचखद्योतार्चिरह्नि सूर्य
कमकाशनकरोति एवंमहतिपुरुषेसुजन पुंस इतरानीचामायातथातनतत्रकिंचित्करोति किंतु आत्मनिस्वस्मिन्नेवऐश्वर्यसामर्थ्यनिहन्तीति ४५ अन्यदप्याश्चर्य
माह तावदिति वत्सपालाःवत्सा पालाश्चसर्वेपिशिविपाणादयश्च ४६ ४७ श्रीवत्सप्रभायुक्तान्यगदानिदोष्णुयेषाम् रत्नमयानिकंबुवच्चिधाराणिकंकणानिपा
णिषुयेषाम् तेन्वतेन ४८ तयाभूरिबहुजन्मार्जितपुण्यवत्सुकैर्जनैरर्पिते ४९ चंद्रिकाविशदस्मितयुक्ते सहारुणगुणेनचवर्त्तमानायेऽपांगास्तै वीक्षिते स्वका
र्यानास्वभक्तमनोरथानांरजःसत्त्वाभ्यास्त्रष्टृपालकाइवव्यदृश्यत सत्त्ववद्विशदस्मितेनपालकाइव रजोवदरुणगुणेनचस्त्रष्टारइव ताहक्कटाक्षैर्द्योतमानाइत्य
र्थः ५० आत्मादिस्तंबपर्यंतैः अनेकार्हैः अनेकार्हणैः ५१ अजाद्याभिर्मायाविद्यादिभिर्विभूतिभिःशक्तिभिः महदादिभिरिति महत्सूत्रयोरपृथक्त्व

तम्यातमोवन्नैहारंखद्योतार्चिरिवाहनि महतीतरमायैश्यनिहन्त्यात्मनिपुंजतः ४५ तावत्सर्वेवत्सपाला पश्यतोऽजस्यतत्क्षणात् व्यदृ
श्यतघनश्यामाः पीतकौशेयवाससः ४६ चतुर्भुजाः शंखचक्रगदाराजीवपाणयः किरीटिनः कुंडलिनोहारिणोवनमालिनः ४७ श्रीव
त्सांगदद्दोरत्नकंबुकंकणपाणयः नूपुरैः कटकैर्भाताः कटिसूत्रांगुलीयकैः ४८ आंघ्रिमस्तकमापूर्णास्तुलसीनवदामभिः कोमलैः
सर्वगात्रेषुभूरिपुण्यवदर्पितैः ४९ चंद्रिकाविशदस्मेरैः सारुणापांगवीक्षितैः स्वकार्थानामिवरजःसत्त्वाभ्यांस्रष्टृपालकाः ५० आ
त्मादिस्तंबपर्यंतैर्मूर्तिमद्भिश्चराचरैः नृत्यगीताद्यनेकार्हैः पृथक्पृथगुपासिताः ५१ अणिमाद्यैर्महिमभिरजाद्याभिर्विभूतिभिः चतुर्विं
शतिभिस्तत्त्वैः परीतामहदादिभिः ५२ कालस्वभावसंस्कारकामकर्मगुणादिभिः स्वमहिध्वस्तमहिभिर्मूर्तिमद्भिरुपासिताः ५३ सत्य
ज्ञानानंतानंदमात्रैकरसमूर्तयः अस्पृष्टभूरिमाहात्म्याअपिह्युपनिषद्दृशाम् ५४ एवंसकृद्ददर्शाजः परब्रह्मात्मनोऽखिलान् यस्य
भासासर्वमिदंविभातिसचराचरम् ५५ ततोऽतिकुतुकोद्वृत्यस्तिमितैकादशेंद्रियः तद्धाम्नाऽभूदजस्तूष्णींपूर्देव्यंतीवपुत्रिका ५६

विवक्षयाचतुर्विंशतितत्त्वैर्जगत्कारणैः ५२ कालादिभिश्चतत्सहकारिभिः तत्रस्वभावः परिणामहेतुः संस्कारउद्बोधकः स्वमहिध्वस्तमहिभिः भगवन्महिम्नातिरस्कृ
तस्वातंत्र्यैः उक्तैः सर्वैरणिमाद्यैः ५३ सर्वेषामूर्तिभ्योपिविशेषमाह सत्यज्ञानरूपाश्चअनंताश्चआनंदरूपाश्च तथापितदेकमात्राविजातीयसभेदरहिताः तत्रापिचैक
रसाः सदैकरूपामूर्तयोयेषांतेपद्यसत्यज्ञानादिमात्रैकरसास्तद्ब्रह्मतदेवमूर्तयोयेषामितिअतएवोपनिषत्आत्मज्ञानमेवदृक्चक्षुर्येषांतेषामपिहिनिश्चितम् अस्पृष्ट
भूरिमाहात्म्याःनस्पृष्टस्पर्शयोग्यभूरिमाहात्म्ययेषांतेतथाभूताःसंतोव्यदृश्यंतेति ५४ एवंसकृत्एकदैवददर्श परब्रह्मणोविशेषणम् यस्येति ५५ अतिकुतुकेना
श्चर्येणउद्वृत्यदृष्टी पर्यवृत्य हंसपृष्ठेनिपेत्येतिवाकुतुकशब्देतृतीयायाश्छादसोलुक् यद्वा उद्वृत्यइतिच्छेदः अतिकुतुकेनउद्वृत्य विलोक्य विपर्यस्त संभ्रांतियावत्
पाठांतरेतुअतिकुतुकेनोद्वृत्तःक्षुभितः तेषांधाम्नातेजसास्तब्धसर्वेंद्रियोब्रह्मातूष्णींनिश्चलोऽभूत् अत्रदृष्टांत पूर्देवीव्रजाधिष्ठात्रीकाचिद्देवतातस्याःअतिसमीपेपुत्रि
काचतुर्मुखीरूपकमतिमेव ५६

एवंमोहमग्नमजसुज्जहारेत्याह इतीति इरेशेइरासरस्वतीतस्याईशोब्रह्मणिकिमिदमितिमुह्यतिसतिपश्चात्तद्द्रष्टुमप्यनीशेसतिपरमोजः श्रीकृष्णःसपदिअजाजवनि
कांमायारूपांतिरस्करिणीम् ययाऽद्भुतंदर्शितम् तांचच्छादतिरोधत्तअपसारितवानित्यर्थः अथवाअयंलोकाभिमानीममैश्वर्यंद्रष्टुमयोग्यइतितस्योपरिमायांप्र
सारितवानितिकमुह्यतिसति अतर्क्येतर्कागोचरे निजःअसाधारणोमहिमायस्यतस्मिन्नितिमोहेहेतुरुक्तः दर्शनायोग्यत्वायत्रीणिविशेषणानि स्वप्रमि
तिके स्वप्रमितिस्वप्रकाशंचतत्कंसुखंचयस्मिन् अतएवाजातःप्रकृतेःपरत्रपरस्मिन् अतन्निरसनमुखेन ब्रह्मकैःश्रुतिशिरोभिर्मितिर्ज्ञानंयस्मिनतस्मिन्
स्वरूपे ५७ अर्वाक्बहिःप्रतिलब्धान्यक्षीणियेनसःपरेतवन्मृतोयदिकथंचित्पुनरुत्तिष्ठतितथादृष्टीःनेत्राणि ५८ जनानामाजीव्यैर्द्रुमैराकीर्णम् सु
माप्रियंसंततानिआसमंतात्प्रियाणियस्मिन्तत् ५९ तदाह यत्रेति नैसर्गदुर्वैराःस्वाभाविकाप्रतिकार्यवैरवंतोऽपिनराःसिंहादयश्चमित्राणीवयत्रसह

इतीरेशेऽतर्क्येनिजमहिमनिस्वप्रमितिकेपरत्राजातोऽतन्निरसनमुखब्रह्मकमितौ अनीशेऽपिद्रष्टुंकिमिदमितिवामुह्यतिसति
चच्छादाजोज्ञात्वासपदिपरमोऽजाजवनिकाम् ५७ ततोऽर्वाक्प्रतिलब्धाक्षःकःपरेतवदुत्थितः कृच्छ्रादुन्मील्यवैदृष्टीराचष्टेदं
सहात्मना ५८ सपद्येवाभितःपश्यन्दिशोऽपश्यत्पुरःस्थितम् वृन्दावनंजनाजीव्यद्रुमाकीर्णंसमाप्रियम् ५९ यत्रनैसर्गदुर्वैराः
सहासन्नृमृगादयः मित्राणीवाजितावासद्रुतरुट्तर्षकादिकम् ६० तत्रोद्वहत्पशुपवंशशिशुत्वनाट्यंब्रह्माद्वयंपरमनन्तमगाधबो
धम् वत्सान्सखीनिवपुरापरितोविचिन्वदेकंसपाणिकवलंपरमेष्ठ्यचष्ट ६१ दृष्ट्वात्वरेणनिजधोरणतोऽवतीर्यपृथ्व्यांवपुःकनक
दण्डमिवाभिपात्य स्पृष्ट्वाचतुर्मुकुटकोटिभिरङ्घ्रियुग्मंनत्वामुदश्रुसुजलैरकृताभिषेकम् ६२ उत्थायोत्थायकृष्णस्यचिरस्यपा
दयोःपतन् आस्तेमहित्वंप्राग्दृष्टंस्मृत्वास्मृत्वापुनःपुनः ६३ शनैरथोत्थायविमृज्यलोचनेमुकुन्दमुद्वीक्ष्यविनम्रकन्धरः कृताञ्जलिः
प्रश्रयवान्समाहितःसवेपथुर्गद्गदयैलतेलया ६४ इतिश्रीभागवतेमहापुराणेदशमस्कंधेत्रयोदशोऽध्यायः १३ ६९

वासन् अजितस्यावासेनद्रुताःपलायिताःरुट्तर्षादयःक्रोधलोभाद्योयस्मात् तथाभूतंवृंदावनमपश्यदिति ६० तत्रचपरमेष्ठीब्रह्माएवंपुरापूर्ववदेक
ब्रह्मअचष्ट अपश्यत् कथंभूतम् पशुपवंशशिशुत्वनाट्यमुद्वहत् नाट्यमित्यत्रहेतुः अद्वयमित्यादि अद्वयंचवत्सान्विचिन्वत् एकंचसखीन्
अगाधबोधंचविचिन्वत् अनंतंचपरितोविचिन्वत् परंचशिक्यमुद्वहत् ब्रह्मचसपाणिकवलमितिनाट्यमेवोद्वहदित्यर्थः ६१ निजधोरणतः
स्ववाहनात्त्वरेणवेगेनावतीर्यदंडवन्नत्वा चतुर्णांमुकुटानामग्रैरंघ्रियुग्मंस्पृष्ट्वामुदश्रुसुजलैरानंदाश्रुरूपैःसुजलैरभिषेकमकरोदिति ६२ चिरस्यचिरं
पादयोःपतन्नास्ते ६३ सवेपथुःसकंपःअतएवगद्गदयाअनुकरणमेतत् इलयावाचाऐलत अस्तौत् ६४ इतिश्रीभागवतेमहापुराणेदश
मस्कंधेटीकायांत्रयोदशोऽध्यायः १३ ६९ ६९ ६९ ६९ ६९ ६९ ६९

भू.

नतुर्दशे ऽध्युत्तरस्य पूर्वोक्तस्य कनिश्चयम् अनोदृ वर्जुमस्तौषीत्कृष्णं ब्रह्माविमोहितः १ स्वकृतापराधनिविवासकृपतया भगवन्महिमानमनवगाह मानःपश्चादपि स्वरूप मेवकीर्तयन्नाह नौमीति हेईड्य स्तुत्य तेतुभ्यं नौमि द्वितीयार्थेचतुर्थी अथवा नौमीत्युक्तं प्रस्तुतस्य भगवत कर्मत्वं ज्ञातेप्रयोजनापेक्षायामेव भूतो भगवानेव प्रयोजन मितितादर्थ्येचतुर्थी यद्वा तुभ्यंत्वामेव प्रसादयितुंत्वामेवस्तौमीत्यर्थः अभ्रवद्वपुर्यस्यतस्मैतुभ्यम् तडिद्वदंबरंयस्यतस्मै गुंजानामवतंसौकर्णभूषणेपरिपारिम् पि च्छंचबर्हपिंडतैर्लसन्मुखंयस्यतस्मै वन्या स्रजोयस्यतस्मै कवलादिभिर्लक्ष्मभि श्री शोभायस्यतस्मै मृदूपादौयस्यतस्मै पशुपस्याङ्गजाय १ ननु नौमीतिप्रतिज्ञा यकिंस्वरूपानुवादमात्रंक्रियतेअतआह अस्यापीति भोदेव अस्यापिस्फुलमत्वेनप्रकाशितस्यापितववपुषोऽवतारस्यमहिमानमवसितुंज्ञातुंकोऽपिवअहमपि नेशो नशक्नोमि यद्वाकश्चिदपिनेशेनसमर्थोऽभूत् सुलभतायविशेषणद्वयम् मदनुग्रहस्यममानुग्रहोयस्मात्तन्मदनुग्रहंतस्य किंच स्वेच्छामयस्य स्वीयाना भक्तानांयथायथेच्छातथातथाभवत तर्हिकिमितिज्ञातुंनशक्यतेअतआह नतुभूतमयस्यअचिंत्यशुद्धसत्त्वात्मकस्य यदाऽस्यैवंतदाकथंपुन साक्षात्तवकेवल स्यात्मसुखानुभूतेरेवस्वसुखानुभवमात्रस्यावतारिणोगुणातीतस्यमहिमानमांतरेणनिरुद्धेनापिमनसाकोवाज्ञातुंसमर्थोभवेत् अथवा भूतमयस्यउक्तलक्षणा स्यापिविराडूपस्यतवत्वन्नियम्यस्यवपुषःमहिमानमेवावसितुंकोऽपिनेशे तदासाक्षात्तवैवासाधारणस्यनियम्यनियंतृभेदरहितस्यउक्तलक्षणस्यास्यमहिमा

ब्रह्मोवाच नौमीड्यतेऽभ्रवपुषेतडिदंबरायगुंजावतंसपरिपिच्छलसन्मुखाय वन्यस्रजेकवलवेत्रविषाणवेणुलक्ष्मश्रियेमृदुपदेपशु पाङ्गजाय १ अस्यापिदेववपुषोमदनुग्रहस्यस्वेच्छामयस्यनतुभूतमयस्यकोऽपि नेशेमहित्ववसितुंमनसांतरेणसाक्षात्तवैवकिमुतात्म सुखानुभूते २ ज्ञानेप्रयासमुदपास्यनमंतएवजीवंतिसन्मुखरितांभवदीयवार्त्ताम् स्थानेस्थिता श्रुतिगतांतनुवाङ्मनोभिर्येप्रायशोऽजित जितोऽप्यसितैस्त्रिलोक्याम् ३ श्रेयःस्रुतिंभक्तिमुदस्यतेविभोक्लिश्यंतियेकेवलबोधलब्धये तेषामसौक्लेशलएवशिष्यतेनान्यद्यथास्थूलतु षावघातिनाम् ४ पुरेहभूमन्बहवोऽपियोगिनस्त्वदर्पितेहानिजकर्मलब्धया विबुध्यभक्त्यैवकथोपनीतयाप्रपेदिरेंऽजोऽच्युततेगतिंपराम् ५

नमवसितुंकोऽपिनेशइतिकिमुवक्तव्यमित्यर्थः २ तर्हिअहो कथंसंसारंतरेयुरतआह ज्ञानइति हेअजितउदपास्य ईषदप्यकृत्वासद्भिर्मुखरितांस्वतएवनित्यप्रकटितां भवदीयवार्त्तांस्वस्वस्थानएवस्थिता तत्सन्निधिमात्रेणस्वतएवश्रुतिगतांश्रवणप्राप्तांतनुवाङ्मनोभिर्नमंत सत्कुर्वंतोयेजीवंतिकेवलंयद्यपिनान्यत्कुर्वंति तैःप्रायशस्त्रि लोक्यामन्यैरजितोऽपित्वंजितःप्राप्तोऽसीति विज्ञानधर्मेणेत्यर्थः ३ भक्तिविनाज्ञानंतुनैवसिद्ध्येदित्याह श्रेयःस्रुतिमिति श्रेयसामभ्युदयापवर्गलक्षणानांस्रुतिःस्रवणं यस्या सरसइवनिर्झराणाम् तांतेतवभक्तिमुदस्यत्यक्त्वा श्रेयःसृतिमितिपाठेश्रेयसांमार्गभूतामिति तेषांक्लेशल क्लेशएवावशिष्यते अयंभाव यथाअल्पप्रमा णंधान्यंपरित्यज्यअंत कणहीनान्स्थूलधान्याभासान्तुषानेवावघ्नतितेषांनकिंचित्फलम् एवंभक्तिंतुच्छीकृत्ययेकेवलबोधायप्रयतंतेतेषामपीति ४ भक्त्यैव ज्ञानंनान्यथेत्यत्रसदाचारंप्रमाणयति पुरेति हेभूमन् इहलोकेपूर्वयोगिनोऽपिसंत योगेर्ज्ञानमप्राप्यपश्चात्त्वदर्पितेहा त्वय्यर्पितालौकिक्यपीहाचेष्टायैस्ते निजकर्म लब्धयात्वदर्पितैर्निजैः कर्मभिर्लब्धया त्वय्यर्पिताईहानिजानिकर्माणिचतैर्लब्धया इत्येकपदंवा कथोपनीतयाकथयास्वसमीपप्रापितया भक्त्यैवविबुध्य आत्मज्ञानंज्ञा त्वाअंजसुखेनैवतेपरांगतिंप्राप्ता ५

एवंतावत्सगुणनिर्गुणयोरुभयोरपि ज्ञानं दुर्घटमिति त्वत्कथाश्रवणादिनैव तत्प्राप्तिर्नान्यथेत्युक्तम् इदानीं यद्यप्युभयोरविशेषेणदुर्ज्ञेयत्वमुक्तम् तथाऽपिगुणातीतस्यज्ञा
नंकथंचिद्भवेत् नतुसगुणस्यतव अचिंत्यानंतगुणत्वादिति श्लोकद्वयेनस्तौति तथाऽपीति हेभूमन् अपरिच्छिन्न अगुणस्यते महिमा अमलैरंतरात्मभिः प्रत्याहृतेंद्रियैः वि
बोद्धुं बोधगोचरीभवितुमर्हति योग्योभवति अथवा विबोद्धुंज्ञातुमर्हति अर्हतेःशक्यत इत्यर्थः यद्वा महिमेति महिमानंकश्चिद्बोद्धुमर्हतीत्यर्थः कथम् स्वानुभवात् आत्माका
रांतःकरणसाक्षात्कारात् नन्वंतःकरणमपि सविकारमेव विषयीकरोतीति कथमात्माकारता तस्येत्यत आह अविक्रियादिति विक्रियाविशेषाकारःतद्रहितात् विशेषपरित्या
गएवात्माकारतेत्यर्थः नन्वंतःकरणसाक्षात्कारविषयत्वेऽनात्मत्वप्रसंगःस्यादत आह अरूपत इति रूपंविषयःअविषयात् वृत्तिविषयमेवात्मनो नफलविषयत्वमतो नायं
दोष इतिभावः कथंतर्हिस्फूर्तिः अनन्यबोध्यात्मतया स्वप्रकाशत्वेनैव नत्वन्यथा इदंतदिति विषयत्वेनेत्यर्थः बुद्धितत्स्थचिदाभासौ द्वावेतौ व्याप्नुतो घटम् तत्राज्ञानंधि
यानश्येदाभासेनघटःस्फुरेदिति अनात्मसु आत्मनितु ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरिहेष्यते स्वयंस्फुरणरूपत्वान्नाभासस्तत्र युज्यते अथवा भासर्वतोऽनरं
गालक्ष्मीरपि अगुणस्यते महिमहिमानममलैरंतर्वृत्तिभिरिंद्रियैरपि यथायादृक्वस्तु तस्तेनरूपेणविबोद्धुंकिमर्हति नार्हत्येवेत्यर्थः कथंतर्ह्यर्हतितदाह स्वानुभवा

तथाऽपिभूमन्महिमाऽगुणस्यतेविबोद्धुमर्हत्यमलांतरात्मभिः अविक्रियात्स्वानुभवादरूपतोह्यनन्यबोध्यात्मतयानचान्यथा ६ गुणा
त्मनस्तेऽपिगुणान्विमातुंहितावतीर्णस्यकईशिरेऽस्य कालेनयैर्वाविमिताःसुकल्पैर्भूपांसवःखेमिहिकाद्युभासः ७ तत्तेऽनुकंपांसुस
मीक्षमाणोभुंजानएवात्मकृतंविपाकम् हृद्वाग्वपुर्भिर्विदधन्नमस्तेजीवेतयोमुक्तिपदेसदायभाक् ८ पश्येशमेऽनार्यमनंतआद्येपरा
त्मनित्वय्यपिमायिमायिनि मायांवितत्येक्षितुमात्मवैभवंह्यहंकियानैच्छमिवार्चिरग्नौ ९ अतःक्षमस्वाच्युतमेरजोभुवोह्यजानत
स्त्वत्पृथगीशमानिनः अजाऽवलेपांधतमोऽधचक्षुषएषोऽनुकंप्योमयिनाथवानिति १०

दित्यादिनाउक्तार्थमेवैतत् ६ गुणात्मनःगुणा
नात्मात्मनःगुणाधिष्ठातुस्तेतवपुनर्गुणान्विमातुमेतावंत इतिगणयितुमपिकेईशिरेसमर्था बभूवुः दूरतस्तर्हि शेषवार्ता कथंभूतस्यतव अस्यविश्वस्यहिताय धलना
यबहुगुणाविष्कारेणावतीर्णस्य ननुकालेननिपुणैःकिमशक्यमत आह कालेनेति वाशब्दोवितर्के सुकल्पैरतिनिपुणैर्बहुजन्मनाकालेन भूपरमाणवोविमिताविशेषे
णगणिताभवेयुः तथाखेमिहिकाहिमकणाअपि तथाद्युभासःदिविनक्षत्रादिकिरणपरमाणवोऽपि ७ तस्माद्भक्तिरेवसंगच्छत इत्याह तत्तेऽनुकंपामिति सुस
मीक्षमाणः तवकृपाकदाभविष्यतीतिबहुमन्यमानःस्वार्जितंचकर्मफलमनासक्तःसन् भुंजानएवनातीवतपआदिनाक्लिश्यन्नेवंयोजीवेत समुक्तौदायभाग्भवति
भक्तस्यजीवनव्यतिरेकेण दायप्राप्ताविवमुक्तौनान्यदुपयुज्यत इतिभावः ८ तदेवंस्तुत्वाभगवंतंक्षमापयितुंस्वापराधंनिवेदयति पश्येति हेईशमेऽनार्यंदौर्जन्यंपश्यय
दहंमायिनामपिमायिनिविमोहकेत्वय्यपिस्वमायांप्रसार्यआत्मैश्वर्यमीक्षितुमैच्छम् अभिलषितवान् अहोएवंकर्त्तुंत्वय्यहंकियान् नकिंचित् यथाऽग्नेरुद्भूताज्वालाअ
ग्नौनकिंचित् तद्वदिति ९ रजोभुवःरजसोजातस्यअतःअजानतःअतएवाजावलेपांधतमोऽधचक्षुषः अतोजगत्कर्त्ताहमितिमदेनगाढतमोरूपेणांधीभूतेनेत्रेयस्य
अतस्त्वत्तःपृथगीशमानिनःअन्यत्रप्रभुत्वेनवर्त्तमानोऽपिमयिनाथेसतिनाथवान् मद्भृत्यएव अतएषोऽनुकंप्य इतिमत्वाक्षमस्वेत्यर्थः १०

ननुप्रसादविग्रहस्त्वमपिईश्वरएवेतिचेत्तत्राह क्वाहमिति तम प्रकृति महान्महत्तत्वम् अहमहंकार खमाकाश चरोवायु आग्नि वार्जलम् भूश्च प्रकृत्यादिपृथि
व्यन्तैरेतै संवेष्टितोयोऽण्डघट सएवतस्मिन्वासप्तमानेनसंमितस्तिकायोयस्यसोऽहंक्व क्वचतेमहित्वम् कथंभूतस्य ईदृग्विधान्यविगणितान्यण्डानितएवप
रमाणव तेषाञ्चर्यापरिभ्रमणंतदर्थवाताध्वानोगवाक्षाइवरोमविवराणियस्यतस्यतव अतोऽतितुच्छत्वात्त्वयाऽनुकम्प्योऽहमिति ११ अपिच गर्भगतस्यशिशो पा
दयोरुत्क्षेपणमातु किमपराधायभवति लोकेअस्तिनास्तिव्यपदेशाभ्याभावाभावशब्दाभ्यास्थूलसूक्ष्मकार्यकारणशब्दैर्वाभूषितमभिहितम् एतेषांशब्दानांवि
षियेऽपितास्थितमितिवासर्ववस्त्वित्यर्थ हेअधोक्षज तवकुक्षे अनन्तबहि कियदपिकिंचिन्मात्रमपिकिमस्ति नकिंचिदस्तीत्यर्थः अत सर्वस्यतवकुक्षि
गतत्वेनममापितथात्वान्मातृवदपराध सोढव्यइतिभाव १२ किंच विशेषतोऽपित्वत्तोममजन्मप्रसिद्धमित्याह जगत्त्रयेत्यादि जगत्त्रयस्यान्तेप्रलयेयउदधीना
संप्लव संश्लेषःतस्मिन्नुदेउदकेनारायणस्योदरेनाभि तस्यनालादजोविनिर्गतइतियावाक् सातावन्मृषानभवति वैनिश्चितम् तथाऽपितुहेईश्वरत्वत्त अहंकिं
नविनिर्गत नोत्पन्नोऽस्मि अपितुत्वत्तएवोत्पन्नइत्यर्थ १३ तर्हिनारायणस्यपुत्रस्त्वममकिमायाततत्राह नारायणस्त्वमिति नहीतिकाकात्वमेवनारायणइ

क्वाहंतमोमहदहंखचराग्निवार्भूसंवेष्टिताण्डघटसप्तवितस्तिकाय क्वेदृग्विधाविगणिताण्डपराणुचर्यावाताध्वरोमविवरस्यचतेम
हित्वम् ११ उत्क्षेपणंगर्भगतस्यपादयो किंकल्पतेमातुरधोक्षजागसे किमस्तिनास्तिव्यपदेशभूषिततवास्तिकुक्षे कियदप्यनन्त १२
जगत्त्रयान्तोदधिसंप्लवोदेनारायणस्योदरनाभिनालात् विनिर्गतोऽजस्त्वितिवाङ्नवैमृषाकिंत्वीश्वरत्वन्नविनिर्गतोऽस्मि १३ ना
रायणस्त्वंनहिसर्वदेहिनामात्माऽस्यधीशाऽखिललोकसाक्षी नारायणोऽङ्गंनरभूजलायनात्तच्चापिसत्यंनतवैवमाया १४ तच्चेज्ज
लस्थंतवसज्जगद्वपु किंमेनदृष्टंभगवंस्तदैव किंवासुदृष्टंहृदिमेतदैवकिंनोसपद्येवपुनर्व्यदर्शि १५

त्यापादयति कुतोऽहंनारायणइतिचेत्तत्राह सर्वदेहिनामात्मासीति एवमपिकिंनारायणोनभवसि नारोजीवसमूह अयनमाश्रयोयस्यसतथेतित्वमेवसर्वदे
हिनामात्मत्वान्नारायणइतिभाव हेअधीश त्वंनारायणोनहीतिपुन काकु अधीश प्रवर्तकस्ततश्चनारस्यायनंप्रवृत्तिर्यस्मात्सतथेतिपुनस्त्वमेवासावितिकिं
च त्वमखिललोकसाक्षी अखिललोकसाक्षात्पश्यसि अतोनारमयसेजानासीतित्वमेवनारायणइत्यर्थ नन्वेवंनारायणपदव्युत्पत्तौभवेदेवंत्वन्यथाप्रसि
द्धिमित्याशङ्क्याह नारायणोऽङ्गमिति नराद्भूतायेऽर्थास्तथानराज्जातंयज्जलंतदयनाद्योनारायण प्रसिद्ध सोऽपितवैवांगमूर्ति तथाचस्मर्यते नराज्जातानि
तत्त्वानिनाराणीतिविदुर्बुधा तस्यतान्ययनंपूर्वंतेननारायणःस्मृतइति तथाच आपोनाराइतिप्रोक्ता आपोवैनरसूनव अयनंतस्यता पूर्वंतेननारायणःस्मृत
इतिच ननुतन्मूर्तेरपरिच्छिन्नापा कथंजलाश्रयत्वमतआह तच्चापिसत्यंनेति १४ अपरिच्छेदमेवोपपादयति तच्चेदिति जगदाश्रयभूततवतद्वपु जलस्थमि
त्येवयदिसत्सत्यंस्यात्तर्हितदैवकमलनालमार्गेणान्त प्रविश्यसंवत्सरशतंविचिन्वताऽपिमयाहेभगवन्नाचिन्त्यैश्वर्यतत्किमितिनदृष्टम् त्वद्यापिकिमितिनो
व्यदर्शिनदृष्टम् तदैवतप करणान्न्वरसपद्येवसुदृष्टम् अतोमायैव अतस्त्वन्मूर्तेर्देशविशेषपरिच्छेद सत्योनभवतीत्यर्थ १५

अपिच यदिजलादिप्रपंचःसत्यःस्यात्तर्हितेनतवपरिच्छेदोभवेत् सत्तुमायाविलसितइति त्वयैवदर्शितमित्याहश्लोकत्रयेण हेमायाधमनमायोपशमन अत्रैवाव
तारेबहिःस्फुरस्यापिजठरमध्येजनन्याः प्रदर्शनेन १६ ननुबहिःसतएवअंतर्जठरेप्रतिबिंबोऽस्तुकुतः सर्वथामायात्वंतत्राह यस्येति यस्यतवकुक्षौसर्वमिदं
यथाभातितत्सर्वमिहापिबहिरपितथैवभाति किंच सात्मंत्वत्सहितम् तदिदंसर्वमाययाविनाकिंघटेत अयंभावः त्वयिप्रतिबिंबश्चेद्बाह्यात्त्वद्विलोमतयाप्रती
येतनतुतदस्ति नचचादर्शस्थानीयस्यत्वयिप्रतीतिर्नस्यात् अतःसर्वथामिथ्यात्वमेवेति १७ अपिच नकेवलंजनन्याःममापितथैवदर्शितमित्याह अद्यैवे
ति त्वदृते त्वांविनाअस्यविश्वस्यमायात्वंत्वयाममैवचतदप्यद्यैवकिंनदर्शितंकिंतुदर्शितमेव तथाहि एकोऽसीत्यादि ततोमयासहाखिलैस्तत्त्वादिभिरुपासि
ताः तावंतश्चतुर्भुजाअसि जगंतिब्रह्मांडानिइतिप्रागनुक्तमपिदृष्टमितिज्ञातव्यम् १८ ननुब्रह्मन्नूतवमयादर्शितंशुद्धमेवचैतन्यंकथंप्रपंचवन्मायेत्युच्यते

अत्रैवमायाधमनावतारेह्यस्यप्रपंचस्यबहिःस्फुटस्य कृत्स्नस्यचांतर्जठरेजनन्यामायात्वमेवप्रकटीकृतंते १६ यस्यकुक्षाविदंस
र्वंसात्मंभातियथातथा तत्त्वय्यपीहतत्सर्वंकिमिदंमाययाविना १७ अद्यैवत्वदृतेऽस्यकिंममनतेमायात्वमादर्शितमेकोऽसिप्रथमं
ततोव्रजसुहृद्वत्साःसमस्ताअपि तावंतोऽसिचतुर्भुजास्तदखिलैःसाकंमयोपासितास्तावंत्येवजगंत्यभूस्तदमितंब्रह्माद्वयंशिष्य
ते १८ अजानतांत्वत्पदवीमनात्मन्यात्मात्मनाभासिवितत्यमायाम् सृष्टाविवाहंजगतोविधानइवत्वमेषोऽंतइवत्रिनेत्रः १९ सुरे
ष्वृषिष्वीशतथैवनृष्वपितिर्यक्षुयादःस्वपितेऽजनस्य जन्मासतांदुर्मदनिग्रहायप्रभोविधातःसदनुग्रहाय २० कोवेत्तिभूमन्भगव
न्परात्मन्योगेश्वरोतीर्भवतस्त्रिलोक्याम् क्ववाकथंवाकतिवाकदेतिविस्तारयन्क्रीडसियोगमायाम् २१ तस्मादिदंजगदशेषम
सत्स्वरूपंस्वप्नाभमस्तधिषणंपुरुदुःखदुःखम् त्वय्येवनित्यसुखबोधतनावनंतेमायातउद्यदपियत्सदिवावभाति २२ छ

सत्यम् किंतु अद्वितीयेत्वयिनानात्वंगुणावतारमत्स्याद्यवतारेष्विवकार्यवशेनस्वतंत्रमायानिबंधनमित्याह श्लोकद्वयेन अजानतामिति त्वत्पदवींतवस्वरूपमजानताम्
अनात्मनिप्रकृतौस्थितःआत्मैवत्वंआत्मनैवस्वातंत्र्येणमायांवितत्यभासि कथंजगतः सृष्टावहमिवब्रह्मेवविधानेपालनेचएषत्वमिव अंतेत्रिनेत्रइवेति १९
सुरेषुउपेंद्रः ऋषिषुपरशुरामः नृषुरामः २० ननुचस्वातंत्र्येकथंकुत्सितेषुमत्स्यादिषुजन्म कथंवावामनाद्यवतारेयाच्ञादिकार्पण्यंकथंवाऽस्मिन्नेवक
दाचिद्भयपलायनादि अतआह कोवेत्तीति अन्वर्थैःसंबोधनैर्दुर्ज्ञेयत्वमेवाह भूमन्नित्यादिभिः भवतऊतीर्लीलाः त्रिलोक्यांकोवेत्ति क्ववा कथंवा क
दावा कतिवेति अचिंत्यंतवयोगमायावैभवमितिभावः २१ ननुभवत्ववताराणामचिंत्योमहिमा प्रपंचस्यत्वसत्त्वेकथंसत्त्वप्रतीतिरितीमामाशंकांसपरि
करामुपसंहरन्परिहरति तस्मादिति अस्तधिषणंनिरस्तप्रतिभासं त्वय्येवउद्यत्उद्भवत् अपियन्नश्यत् सदिवेत्युपलक्षणमेतत् नित्यमिवसुखमिवचेतनमि
दुःखमिवच अधिष्ठानभूतस्यतवगुणैः तथातथाभातीत्यर्थः २२ छ छ छ छ छ छ

त्वमेवतुसत्यइत्याह एकस्त्वमसत्यकुत आत्मादृश्यमसत्यदृश्यंचात्मादृश्य अत सत्य किंच यद्विकारवत्तदसत्यम् नचत्वयिजन्मादयोविकाराः सन्तीत्याह आद्यःकार
णम् अतोनजन्मआद्यत्वेहेतुःपुराण पुराऽपिनवः कार्यात्पूर्वमपिवर्तमानइत्यर्थ अत्रहेतु पुरुषइति तथाचश्रुति पूर्वमेवाहमिहासमितितत्पुरुषस्यपुरुषत्वमिति न
न्मानन्तराभिव्यक्तलक्षणविकारंवारयति नित्यइति सनातनइत्यर्थ पूर्ण अजस्रसुख अक्षर अमृतइतिचतुर्भिःपदैः क्रमेणवृद्धिविपरिणामापक्षयविनाशानुवा
रयति पूर्णत्वेहेतु अनन्त अद्वयइतिचदेशकालपरिच्छेदरहित वस्तुपरिच्छेदरहितोऽपिअमृतत्वोपपादनायचतुर्विधक्रियाफलत्वंवारयति स्वयंज्योतिर्निरञ्ज
न उपाधितोमुक्तइतिपदत्रयेण अयमाव तत्रोत्पत्तिराप्यइत्यनेनैवनिराकृताप्राप्तिरपिक्रिययाज्ञानेनवाभवेत् क्रियया प्राप्तिरद्वयपदेनैवनिराकृता ज्ञानेन प्राप्ति
वारयति स्वयंज्योतिरिति विकृतिरपितुषापाकरणेनावघातेनव्रीहीणामिवउपाद्यपाकरणेनभवेत् तत्तुअसङ्गत्वान्नसंभवतीत्याह मुक्तउपाधित इति संस्कारो
पिकिमप्यतिशयाधानेनमलापाकरणेनवा तत्रातिशयाधानपूर्णत्वेनैवनिराकृतम् मलापाकरणंनिवारयति निरञ्जनइति निर्मलइत्यर्थ २३ तस्मादेवंभूत
ज्ञानान्मुच्यतइत्याह एवंविधमिति त्वापेविचक्षतेसम्यक्पश्यन्ति कथम् आत्मात्मतया आत्माभत्यक्तस्यस्वरूपेण नचैतद्गुर्वादिषुविनगोणमित्याह सर्वात्मना

एकस्त्वमात्मापुरुषः पुराणः सत्यः स्वयंज्योतिरनन्तआद्यः। नित्योऽक्षरोऽजस्रसुखोनिरञ्जनः पूर्णोऽद्वयोमुक्तउपाधितोऽमृतः २३ ए
वंविधंत्वांसकलात्मनामपिस्वात्मानमात्मात्मतयाविचक्षते गुर्वर्कलब्धोपनिषत्सुचक्षुषायेतेतरन्तीवभवानृताम्बुधिम् २४ आत्मानमे
वात्मतयाऽविजानतांतेनैवजातंनिखिलंप्रपञ्चितम् ज्ञानेनभूयोऽपिचतत्प्रलीयतेरज्ज्वामहेर्भोगभवाभवौयथा २५ अज्ञानसंज्ञौभ
वबन्धमोक्षौद्वौनामनान्यौस्तऋतज्ञभावात् अजस्रचित्यात्मनिकेवलेपरेविचार्यमाणेतरणाविवाहनी २६ त्वामात्मानंपरंमत्वा
परमात्मानमेवच आत्मापुनर्बहिर्मृग्यअहोऽज्ञजनताऽज्ञता २७

मपिस्वात्मानं केन गुरुरेवार्कस्तस्माल्लब्धाउपनिषत् ज्ञानंतदेवसुचक्षु
स्तेनभवएवानृताम्बुधि ततरन्तीव २४ तच्चज्ञानेनतरतीतिनत्वतरतीवेतिनत्वात्मात्मतयाज्ञानेनेत्यर्थंत्रयमितिज्ञातक्रमेणोपपाद्यते तत्रात्मानमेवात्मतयेत्यने
नश्लोकेनज्ञानेनतरतीत्युपपाद्यते अज्ञानसंज्ञावित्यनेनतरतीवेत्येतत् त्वामित्यादिश्लोकद्वयेनतुआत्मात्मतयेत्येतदुपपाद्यते ननुज्ञानेनकथंभवंतरतीतितस्या
ज्ञानमूलत्वादित्याह आत्मानमेवेति तेनैवअज्ञानेनैवप्रपञ्चितमपञ्च रज्ज्वामहेर्भोगभवाभवाविति सर्पशरीरस्याध्यासापवादौयथेति २५ ननुज्ञानेनतरत्येव
किमिदमुच्यते तरतीवेतितत्राह अज्ञानसंज्ञाविति अज्ञानेनसंज्ञायययो तौभवबन्धमोक्षौभवेनबन्धस्तन्मोक्षश्चतौद्वौनामपभिन्नौ ऋतज्ञभावात् ऋतस्यसत्यज्ञ
स्यतस्यभाव तस्मादन्यौनस्त ननुकथमहानप्रलाप क्रियतेपरमार्थविचारादित्याह अजस्रेति अखण्डानुभवरूपेपरेशुद्धेआत्मनिअज्ञानंचनचबन्ध अत
एवनज्ञानंनचमोक्ष तरणौसूर्येरात्र्यहनीइवेति २६ ननुपरमार्थज्ञानादज्ञानकृतोबन्धोनिवर्त्तताम् आत्मात्मतयैवज्ञानादितिकोऽयमाग्रहइत्याशङ्क्याह
यदध्यासादात्मनःपररूपास्फूर्तिस्तदपवादेनतत्त्वेवज्ञानंयुक्तमित्यमुमर्थंव्यतिरेकेणाक्रोशन्निवाह त्वामिति त्वामात्मानंपरंदेहादिमत्वा आत्मनिदेहादिमध्य
स्यतथापरंदेहादिमात्मानमत्वादेहाद्यवात्मानमध्यस्यात्रनष्टआत्माबहिर्मृग्यइतिचिंभनहिगृहेनष्टंवनेमृग्यतइत्यर्थ २७ ६९ ५९

विवेकिनस्तुप्रत्यक्स्वरूपेएवपरमात्मानंविचिन्वंतीत्याह अंतर्भवइति भवतीतिभवः चिज्जडात्मकंशरीरंतन्मध्यएवत्वांमृगयंति अतज्जडंत्यजंतः अपवदंतः ननु सतोज्ञानेनालंकिमसतोऽपवादेनेत्याशंक्यअध्यस्तापवादंविनाऽधिष्ठानतत्वंनज्ञायतइतिसतांव्यवहारेणाह असंतमिति अंतिसमीपेअसंतमपिअहिमंतरेणतन्नि षेधंविनेत्यर्थः संतंगुणंरज्जुंसंतःकिमुयंतिजानंति अंतिसंतमपिगुणमित्तिवानजानंतीत्यर्थः तस्मादात्मतयैवज्ञानान्मुक्तिरितिभावः २८ नन्वेवंज्ञानैकसाध्ये मोक्षेकिमितिभक्तिरूद्बोधिताअतआह अथापीति यद्यपिहस्तप्राप्यमिवज्ञानमुक्तंतथाऽपिहेदेव तवपादांबुजद्वयमध्येएकदेशस्यापियःप्रसादलेशोऽपि तेनानुगृहीतएवभगवतस्तवमहिम्नस्तत्वंजानाति हेभगवन् तेमहिम्नस्तत्वमितिवा एकोऽपिकश्चिदपिचिरमपिविचिन्वन्नपिअतदंशापवादेनविचारयन्न पीत्यर्थः २९ तत्तस्माद्भूरिभागःमहद्भाग्यम् अत्रभवेब्रह्मजन्मनितिरश्चामपिमध्येयत्जन्मतस्मिन्वा येनभाग्येनभवदीयानांजनानामेकोऽपियःकश्चिदपि भूत्वानिषेवे अत्यर्थंसेवेयइति ३० देवादिजन्मतोऽपियत्रकुत्रचित्सद्भक्तिमज्जन्मैवश्रेष्ठमित्यौत्सुक्येनसप्तभिःश्लोकैरभिनंदति अहोऽतिधन्याइत्यादिभिः व्रजगोरमण्यः व्रजस्थागावोरमण्योगोप्यश्चतेत्वयावत्सतरात्मजात्मनावत्सानामात्मजानांचरूपेणयस्यतवतृप्तयेसर्वेऽपियज्ञाअद्यापिनशक्ताःतेनत्वयाप्रतिस्न

**अंतर्भवेऽनंतभवंतमेवह्यतत्त्यजंतोमृगयंतिसंतः असंतमप्यंत्यहिमंतरेणसंतंगुणंतंकिमुयंतिसंतः २८ अथापितेदेवपदांबुजद्वयप्रसा दलेशानुगृहीतएवहि जानातितत्त्वंभगवन्महिम्नोनचान्यएकोपिचिरंविचिन्वन् २९ तदस्तुमेनाथसभूरिभागोभवेऽत्रवान्यत्रतुवाति रश्चाम् येनाहमेकोऽपिभवज्जनानांभूत्वानिषेवेतवपादपल्लवम् ३० अहोऽतिधन्याव्रजगोरमण्यःस्तन्यामृतंपीतमतीवतेमुदा यासांवि भोवत्सतरात्मजात्मनायत्तृप्तयेऽद्यापिनचालमध्वराः ३१ अहोभाग्यमहोभाग्यंनंदगोपव्रजौकसाम् यन्मित्रंपरमानंदंपूर्णंब्रह्मसनातन म् ३२ एषांतुभाग्यमहिमाच्युततावदास्तामेकादशैवहिवयंबतभूरिभागाः एतद्धृषीकचषकैरसकृत्पिबामःशर्वादयोऽङ्घ्र्युदजमध्वमृतास वंते ३३ तद्भूरिभाग्यमिहजन्मकिमप्यटव्यांयद्गोकुलेऽपिकतमाङ्घ्रिरजोभिषेकम् यज्जीवितंतुनिखिलंभगवान्मुकुंदस्त्वद्यापियत्पदरजः श्रुतिमृग्यमेव ३४**

णंतृप्यतायासांस्तन्यममृतरूपंपीतमिति ३१ ३२ किंच एतेषांभाग्यस्यतावन्महिमाआस्ताम् कस्तंवक्तुंशक्नोति शर्वादयः शर्वोऽहंकाराधिष्ठाताआदि र्येषांचंद्रादीनामेकादशानांतेतथावयंच वयमित्यात्मानमेवबहुमन्यमानआह एवंबुद्ध्यहंकारमनश्चक्षुरादाधिष्ठातारस्त्रयोदशदेवाएवतावत्बतअहोभूरिभागाःयस्मादेतेषां हृषीकाणींद्रियाण्येवचषकाणिपानपात्राणितैस्तेचतुर्दशस्यचित्ताधिष्ठातुःअंघ्रीएवउदजेवारिजेतयोर्मधुमकरंदः तदेवामृतंस्वादुआसवंमादकंपिबामः एतदुक्तंभवति यदा प्रत्येकमिंद्रियाभिमानिनोवयंकात्तिसौंदर्यसौगंध्याद्येकदेशसेविनोऽपिकृतार्थाःतदासर्वेंद्रियैःसर्वसेविनामेतेषांकिंवर्ण्यतेभाग्यमिति ३३ अतोमयाप्रार्थिततदस्तुमेना थसभूरिभागइतियत्तदेतदेवेत्याह तद्भूरिभाग्यमिति किंतत् इहमनुष्यलोकेयत्किमपिजन्मतत्रापिअटव्यांयत् तत्रापिगोकुलेयत् अहोसत्यलोकंविहायात्रजन्माभिजाते कोलाभ अतआह अपिकतमांघ्रिरजोभिषेकमिति गोकुलवासिनांमध्येअपिकतमस्ययस्यकस्याप्यंघ्रिरजसाऽभिषेकोयस्मिन्तत् ननुकुतोगोकुलवासिनएवध न्यास्तत्राह यदिति येषांजीवितंनिखिलंभगवान्मुकुंदः परमेवजीवनमित्यर्थः दुर्लभतामाह अद्यापीति श्रुतिमृग्यंवेदैरपिमृग्यमाणएव नतुदृश्यतइत्यर्थः ३४

अपिच किंवर्ण्यतेकृतार्थत्वमेतेषायेषामक्त्याभवानपिऋणीआस्ते ननुकिंदातुमसमर्थोऽहंयेनऋणीस्यामतआह उत अपिभवानपिएषांकुत्रापिकिंविश्वफलात्सर्वफला
मकत्वात्त्वत्त परफलंदातादास्यतीतिनश्चेत अपनुसर्वत्रगच्छत्तूविचारयन्मुह्यति ननुमामेवदत्वाऽनृणः स्यामितिचेन्नाहिनाहि सद्वेषादिवसताभक्तानांपोवेषस्तद
नुकरणमात्रेणपापिष्ठापूतनाऽपित्वामेवापिताप्रापिता तर्हितेसर्वाधिनामपिदास्यामीतिचेत्तत्राह सकुलेति बकाघासुरसहिता एषामपितावदेवचेत्अपर्याप्तमि
त्याह यदिति येषांधामादय त्वत्कृतेत्वदर्थमेवेत्यर्थ ३५ ननुचैतरागादिदोषाणांसत्वात्कथमपिनभक्त परंकिंचिदस्तिकथमेषामपर्याप्तमित्यतआह तावदिति
हेकृष्णरागादयस्तावदेवस्तेनाश्चौरापभवति तथातावद्गृहमपिकारागृहबंधनागारम् मोहो ऽपितावदेवांघ्रिनिगड पादशृंखला यावत्तेत्वदीयाजनानभवतित्व
दीयानांतु रागादयोऽपि त्वन्निष्ठामोचकाएवेतिनयातिर्भयाविशेष, भजनत्वाधिकमितिभाव ३६ नन्वतएवअहमेषांपुत्रादिरूपेणवर्त्तइतिचेत्तत्राह प्रपंचमिति
प्रपन्नाप्रजनताजनसमूहस्तस्याआनंदानांसंदोहसमूहप्रथयितुमिति नाहिकपटपुत्रत्वादिनातादृक्भक्तेरानृण्यसंपद्यतइत्यर्थ ३७ तदेवमाश्चर्यमारभ्याभि

एषांघोषनिवासिनामुतभवान्किंदेवरातेतिनश्चेतोविश्वफलात्फलंत्वदपरंकुत्राप्ययन्मुह्यति सद्वेषादिवपूतनाऽपिसकुलात्वामेवदेवापिताय
द्धामार्थसुहृत्प्रियात्मतनयप्राणाशयास्त्वत्कृते ३५ तावद्रागादयस्तेनास्तावत्कारागृहंगृहम् तावन्मोहोऽघ्रिनिगडोयावत्कृष्णनतेजना
३६ प्रपंचंनिष्प्रपंचोऽपिविडंबयसिभूतले प्रपन्नजनतानंदसंदोहंप्रथितुंप्रभो ३७ जानंतएवजानंतुकिंबहूक्त्यानमेप्रभो मनसो
वपुषोवाचोवैभवंतवगोचरः ३८ अनुजानीहिमांकृष्णसर्वंत्वंवेत्सिसर्वदृक् त्वमेवजगतांनाथोजगदेतत्तवार्पितम् ३९ श्रीकृष्णवृष्णिकु
लपुष्करजोषदायिन्क्ष्मानिर्जरद्विजपशूदधिवृद्धिकारिन् उद्धर्मशार्वरहरक्षितिराक्षसध्रुगाकल्पमार्कमर्हन्भगवन्नमस्ते ४० श्रीशु
कउवाच इत्यभिष्टूयभूमानंत्रिः परिक्रम्यपादयो नत्वाऽभीष्टजगद्धातास्वधामप्रत्यपद्यत ४१ ततोऽनुज्ञाप्यभगवान्स्वभुवंप्राग
वस्थितान् वत्सान्पुलिनमानिन्येयथापूर्वसखंस्वकम् ४२

त्यानंतगुणत्वेनस्वपदुर्ज्ञेयत्वमुक्तम् केचित्तुजानीमइतिस्थितास्तानुपहसन्निवाह
जानंतइति नतुमेमनआदीनांतववैभवविषयइति ३८ जगदीशत्वाद्यभिमानपरित्यज्याह अनुजानीहीति हेकृष्णमामनुजानीहि सत्यलोकंगंतुमनुज्ञांदेहि
स्वमहिमानमस्मदादीनांचज्ञानबलादिसर्वत्वमेववेत्सि यत सर्वदृक्जगतांनाथस्तु त्वमेवेत्येतावत्ज्ञानम् अतोममतास्पदंजगत्एतत्शरीरंचतवार्पितम्
३९ तदेवकिंकरमस्यापयेति अत्यादरेणनमस्करोति श्रीकृष्णेति वृष्णिकुलपद्मस्यप्रीतिदातृत्वेनहेसूर्योपम क्ष्माचअवनि निर्जरादेवाश्चद्विजाश्चपशवश्च
तएवउदधयस्तेषांवृद्धिकारित्वेनहेचंद्रोपम उद्धर्म पाखंडधर्मस्तदेवशार्वरंतम तद्धरतीतितथा अनेनद्वयोपम हेक्षितिराक्षसध्रुक् क्षितौराक्षसा कंसादय
उद्यन्नेवतेभ्योद्रुह्यतीतिपुन सूर्योपम सूर्याद्युपमाऽपिन्यूनेतिमत्वाऽह आऽर्कमर्कमभिव्याप्यसर्वेषामर्हन्पूज्यभगवन् आकल्पकल्पपर्यंतंतेतुभ्यंनमइति
४० ससखिवत्सकमीक्षणकौतुकद्रुतविलंबितपुनमुदेऽद्भुतम् निखिलरूपमतोदधुदच्युतोऽयतुसच कलयन्व्रजमंगलम १ पादयोर्नत्वाअभीष्टसर्वेन पूजि
तमभिमतंवा ४१ अनुज्ञाप्यअनुज्ञामदाप्यपृष्ट्वेत्यर्थ स्वपशुवत्समाणम् यथापूर्वंसखायोयस्मिंस्तत् स्वकंपुलिनम् ४२

नन्वेतावंतंकालंकथंतत्रैवोपविष्टाःकथंचक्षुत्पिपासादिविस्मरणमतआह एकस्मिन्नितिश्लोकद्वयेन अब्देपियातेप्राणेशंकृष्णमंतरात्मनाविनाऽपिप्रियविरहेक्षणोऽपिवर्षा धिकोभवति तथाऽपिमायाहताःक्षणार्धमेनिरे ४३ यत् यया मायया मोहितंजगदभीक्ष्णंपुनःपुनःविस्मृतात्मकं विस्मृतःआत्मैवयेनतत्तथा ४४ अतएवमूचुश्च तेत्वयाऽतिवेगेनस्वागतंसम्यगागतम् एकोऽपिग्रासस्त्वांविनाऽस्माभिर्नाभोजिनभुक्तः इतएहि साधुअविक्षेपेणभुज्यतामिति ४५ अभ्यवहृत्यभुक्त्वा ४६ प्रोद्दामोवेण्वादिस्तस्यरवैरुत्सवस्तेनाढ्यःसंपन्नःगृणन्उपलालनैराह्वयन् गोपीदृशामुत्सवरूपादृशिर्दर्शनंयस्यसः४७ यशोदानंदसूनुनेति बहूनामुक्तिःसहैवदर्शिता यद्वा केचिदाहुःयशोदासूनुनाअपरेनंदसूनुनेति यद्वा यशोदानंदयतीतियशोदानंदःसचासौसूनुश्चेति तथानेनास्मात्महाव्यालाद्वयंचाविताःरक्षिताः ४८ व्रजौकसांस्वतोकेषुस्नेहवल्ल्याऽब्दमन्वहम् शनैर्निःसीमववृधेयथाकृष्णेत्वपूर्ववदित्यादिनास्वतोकेभ्योऽपिपरपुत्रेकृष्णेप्रेमाधिक्यमुक्तम् तत्रपृच्छतिब्रह्म

एकस्मिन्नपियातेऽब्देप्राणेशंचांतरात्मनः कृष्णमायाहताराजन्क्षणार्द्धंमेनिरेऽर्भकाः ४३ किंकिंनविस्मरंतीहमायामोहितचेतसः यन्मोहितंजगत्सर्वमभीक्ष्णंविस्मृतात्मकम् ४४ ऊचुश्चसुहृदःकृष्णंस्वागतंतेऽतिरंहसा नैकोऽप्यभोजिकवलएहीतःसाधुभुज्यताम् ४५ ततोहसन्हृषीकेशोऽभ्यवहृत्यसहार्भकैः दर्शयंश्चर्माजगरंन्यवर्त्ततवनाद्व्रजम् ४६ बर्हप्रसूनवनधातुविचित्रितांगःप्रोद्दामवेणुदलशृंगरवोत्सवाढ्यः वत्सान्गृणन्ननुगगीतपवित्रकीर्त्तिर्गोपीदृगुत्सवदृशिःप्रविवेशगोष्ठम् ४७ अद्यानेनमहाव्यालोयशोदानंदसूनुना हतोऽवितावयंचास्मादितिबालाव्रजेजगुः ४८ राजोवाच ब्रह्मन्परोद्भवेकृष्णेइयान्प्रेमाकथंभवेत् योऽभूतपूर्वस्तोकेषुस्वोद्भवेष्वपिकथ्यताम् ४९ श्रीशुकउवाच सर्वेषामपिभूतानांनृपस्वात्मैववल्लभः इतरेऽपत्यवित्ताद्यास्तद्वल्लभतयैवहि ५० तद्राजेंद्रयथास्नेहःस्वस्वकात्मनिदेहिनाम् नतथाममतालंबिपुत्रवित्तगृहादिषु ५१ देहात्मवादिनांपुंसामपिराजन्यसत्तम यथादेहःप्रियतमस्तथानह्यनुयेचतम् ५२ देहोऽपिममताभाक्चेत्तर्ह्यसौनात्मवत्प्रियः यज्जीर्यत्यपिदेहेऽस्मिन्जीविताशाबलीयसी ५३ तस्मात्प्रियतमःस्वात्मासर्वेषामपिदेहिनाम् तदर्थमेवसकलंजगदेतच्चराचरम् ५४ कृष्णमेनमवेहित्वमात्मानमखिलात्मनाम् जगद्धितायसोऽप्यत्रदेहीवाभातिमायया ५५

न्निति ४९ श्रीकृष्णस्यसाक्षादात्मत्वात्तस्मिन्नात्मीयेभ्यःप्रेमाधिक्यंयुज्यतइतिवक्तुं प्रथमंतावदात्मनःस्वतःप्रेमत्वमन्येषांतुतदुपाधिकमिति दर्शयतिपंचभिः सर्वेषामपीति ५० कुतःतथादर्शनादित्याह तदिति तस्मादेवकारणात्स्वस्वकात्मनि अहंकारास्पदेऽपिदेहेआत्माध्यासतारतम्येनप्रेमतारतम्यंदृश्यमानंतन्निबंधनमेवेतिदर्शयितुंमूढामूढभेदेनविशेषमाह देहात्मवादिनामितिद्वाभ्यां तंदेहमनुभवंतियेपुत्रादयस्तेतुनतथाप्रियतमाइत्यर्थः ५१ ५२ यद्यस्माज्जीर्यत्यपि आसन्नमरणेऽपिजीविताशाभवति अयंभावः नजीविष्यतीतिनिश्चितेऽपिदेहेयत्प्रेमास्पदत्वंतदात्मगतमेवसंगच्छतइति अथवा यद्यस्मिन्देहेजीर्यत्यपिजीविताशाअविवेकदशायामासीत् साऽपिविवेकिनोयदाममताभाक्भवतितदात्वनात्मवास्थेतितदर्थमेवसकलंप्रियमित्यर्थः ५३ ५४ प्रस्तुतमाह कृष्णमेनमिति ५५ ५६ ५७ ५८

नकेवलमात्मनामात्माअपितुजडानामपीत्याह वस्तुतइति सर्वजगत्कारणमितिकृष्णजानतापुंसास्थावरजगमंचसर्वंभगवद्रूपंभगवानेवस्वरूपंयस्यतत् नान्यत्
५६ कुतइतितदाह सर्वेषामिति भावार्थ परमार्थ भवतिभवत् परिणाममप्राप्नुवत् कारणतस्मिन् तस्यापिभवत कारणस्यापिभगवान्कृष्णएवकारणम् अत कि
मतत् श्रीकृष्णव्यतिरिक्तंवस्तुरूप्यताम् तस्माच्छ्रीकृष्णस्यैवपरमार्थत्वात्तदेकशरणानामयत्नसिद्धोमोक्षइति ५७ प्रकरणार्थमुपसंहरति समाश्रिताइति
पुण्ययशोयस्यसपुण्ययशा सचासौमुरारिश्चतस्यपदपल्लवएवप्लव तयेसम्यगाश्रितामहत्पदंमहतांपदमाश्रयम् यद्वा महच्चतत्पदंचेतितया तेषांभवाम्बुधिर्वत्स
पदमात्रभवति किंच परंपदंश्रीवैकुण्ठाख्यंपदंस्थानंभवति विपदांपदंविपद तत्तुन कदाचिदपितेषानभवति नतत पुनरावर्त्तनइत्यर्थ ५८ ५९ सुहृद्भिस्त्व
रितमुष्णातोऽन्योऽन्यशिक्यादीनित्यादिनाउक्तम् अघार्दनंचशाड्वलजेमनंभोजनंच व्यक्तेतरत् व्यक्ताद्जडमपचादितरत् मुग्धत्वात्सकवत्सवत्सपालरूपम्

वस्तुतोजानतामत्रकृष्णंस्थास्नुचरिष्णुच भगवद्रूपमखिलंनान्यद्वस्त्विहकिंचन ५६ सर्वेषामपिवस्तूनांभावार्थोभवतिस्थित तस्यापिभगवा
न्कृष्णःकिमतद्वस्तुरूप्यताम् ५७ समाश्रितायेपदपल्लवप्लवंमहत्पदंपुण्ययशोमुरारे भवाम्बुधिर्वत्सपदंपरंपदंपदंपदंयद्विपदांनतेषाम् ५८
एतत्तेसर्वमाख्यातंयत्पृष्टोहमिहत्वया यत्कौमारेहरिकृतंपौगंडेपरिकीर्त्तितम् ५९ एतत्सुहृद्भिश्चरितंमुरारेरघार्दनंशाड्वलजेमनंच व्य
क्तेतरद्रूपमजोर्वभिष्टवंशृण्वन्गृणन्नेतिनरोऽखिलार्थान् ६० एवंविहारैः कौमारैः कौमारौजहतुर्व्रजे निलायनैः सेतुबन्धैर्मर्कटोत्प्लवनादि
भिः ६१ इतिश्रीभाग० महा० दश० ब्रह्मस्तुतिर्नामचतुर्दशोऽध्याय १४ श्रीशुकउवाच ततश्चपौगंडवयःश्रितौव्रजेबभू
वतुस्तौपशुपालसंमतौ गाश्चारयंतौसखिभिःसमंपदैर्वृंदावनंपुण्यमतीवचक्रतु १ तन्माधवोवेणुमुदीरयन्वृतोगोपैर्गृणद्भिःस्वयशो
बलान्वित पशून्पुरस्कृत्यपशव्यमाविशद्विहर्तुकाम कुसुमाकरंवनम् २ तन्मंजुघोषालिमृगद्विजाकुलंमहन्मन प्रख्यपय सरस्व
ता वातेनजुष्टंशतपत्रगंधिनानिरीक्ष्यरंतुंभगवान्मनोदधे ३ सतत्रतत्रारुणपल्लवश्रियाफलप्रसूनोरुभरेणपादयो स्पृशाच्छिखान्
वीक्ष्यवनस्पतीन्मुदास्मयन्निवाहाग्रजमादिपूरुष ४ यद्वा व्यक्तेतर निद्रालसत्त्वरूप्यतइतिरूपम् अजस्यऊरुर्महान् अभिष्टवस्तवस्तंब्रह्म
कृतांस्तुतिम् एतत्शृण्वन्गृणन्गायन्नर सर्वपुरुषार्थानवाप्नोति ६० ६१ इतिश्रीपरमानंदनृसिंहपदपद्मपद व्याकरोच्छ्रीधरस्वामीयथामतिविधि
स्तुतिम् १ इतिदशमेटीकायांचतुर्दशोऽध्याय १४ तत पंचदशेधेनुपालनधेनुकार्दनम् कालियस्वेडतोगोपरक्षणंचनिरूप्यते १ अद्वितीयमवे
शनवयास्विन्नान्सखीनत कृष्ण प्रावेशयत्पक्वफलतालालिकाननम् २ पशुपालसंमतौपशुपालनेसंमतौ पशुपालानांवासंमतौ ईषद्धयोबलातिरेकमनुकूल
तावित्यर्थ अतीवचक्रतुः सर्वत प्रसर्पणेन १ स्वयशोगृणद्भिर्गोपैर्वृत तद्वनमाविशत् २ तद्वनंनिरीक्ष्यरंतुंमनोदधे कथंभूतम् मंजुघोषायेऽलिमृगद्वि-
जाः भ्रमरमृगपक्षिण तैराकुलंव्याप्तम् महन्मन प्रख्यपय सरस्वतांमहतांमनसातुल्यस्वच्छपयोयस्मिन्तत्सर आश्रयत्वेनास्ति यस्यतेनवातेनेतिशैत्यमु
क्तम् शतपत्रगंधिनेतिपरिमलवत्त्वम् जुष्टमनेनमांद्यसूचितम् ३ अरुणपल्लवश्रियासहस्पृशत्य शिखा शाखाग्राणियेषांतान् ४

तरुजन्मयेनकृतंतस्यतमसःपापस्यअपहत्यैनाशाय अथवा येनत्वयाईश्वरेणसर्वोपकारकंतरुजन्मकृतंतंत्वांनमंति एवंश्लाघ्येऽपिजन्मनियदज्ञानरूपंतमोऽस्ति तस्यापहत्यै ५ हेअनघ वनेगूढमपित्वांनत्यजंति त्वयिमनुष्यवेषेणनिगूढेसतिमुनयोऽप्यलिवेषेणनिगूढास्त्वांभजंतीत्यर्थः ६ इयान्हिसतांनिसर्गइति यदस्तिस्वस्मिन्तद्गृहमागतायमहतेमहत्पुरुषायसमर्पयंतीति ७ तृणवीरुधश्चतवपादौस्पृशंतीतितथा करजाभिमृष्टाः नखैःस्पृष्टाः सदयैरवलोकनैःश्री रपियस्मैस्पृहयतिकेवलंतेनभुजयोरंतरेणवक्षसागोप्योधन्याइति ८ एवंश्रीमत्वृंदावनंप्रतिप्रीतःसन् अद्रेःसमीपवर्त्तिसरित्तटेषुपशून्संचारयन्सानुगः

श्रीभगवानुवाच अहोअमीदेववरामरार्चितंपादांबुजंतेसुमनःफलार्हणम् नमंत्युपादायशिखाभिरात्मनस्तमोपहत्यैतरुजन्मयत्कृ तम् ५ एतेऽलिनस्तवयशोऽखिललोकतीर्थंगायंतआदिपुरुषानुपदंभजंते प्रायोअमीमुनिगणाभवदीयमुख्यागूढंवनेऽपिनजहत्यन घात्मदैवम् ६ नृत्यंत्यमीशिखिनईड्यमुदाहरिण्यःकुर्वंतिगोप्यइवतेप्रियमीक्षणेन सूक्तैश्चकोकिलगणागृहमागतायधन्यावनौकस इयान्हिसतांनिसर्गः ७ धन्येयमद्यधरणीतृणवीरुधस्त्वत्पादस्पृशोद्रुमलताःकरजाभिमृष्टाः नद्योऽद्रयःखगमृगाःसदयावलोकै र्गोप्योंतरेणभुजयोरपियत्स्पृहाश्रीः ८ श्रीशुकउवाच एवंवृंदावनंश्रीमत्कृष्णःप्रीतमनाःपशून् रेमेसंचारयन्नद्रेःसरिद्रोधः स्सुसानुगः ९ क्वचिद्गायतिगायत्सुमदांधालिष्वनुव्रतैः उपगीयमानचरितःस्रग्वीसंकर्षणान्वितः १० क्वचिच्चकलहंसानामनुकूज तिकूजितम् अभिनृत्यतिनृत्यंतंबर्हिणंहासयन्क्वचित् ११ मेघगंभीरयावाचानामभिर्दूरगान्पशून् क्वचिदाह्वयतिप्रीत्यागोगोपा लमनोज्ञया १२ चकोरक्रौंचचक्राह्वभारद्वाजांश्चबर्हिणः अनुरौतिस्मसत्वानांभीतवद्व्याघ्रसिंहयोः १३ क्वचित्क्रीडापरिश्रांतंगोपोत्सं गोपबर्हणम् स्वयंविश्रमयत्यार्यंपादसंवाहनादिभिः १४ नृत्यतोगायतःक्वापिवल्गतोयुध्यतोमिथः गृहीतहस्तौगोपालान्हसंतौप्र शशंसतुः १५ क्वचित्पल्लवतल्पेषुनियुद्धश्रमकर्शितः वृक्षमूलाश्रयःशेतेगोपोत्संगोपबर्हणः १६ पादसंवाहनंचक्रुःकेचित्तस्यमहात्म नः अपरेहतपाप्मानोव्यजनैःसमवीजयन् १७ अन्येतदनुरूपाणिमनोज्ञानिमहात्मनः गायंतिस्ममहाराजस्नेहक्लिन्नधियःशनैः १८ एवंनिगू ढात्मगतिःस्वमाययागोपात्मजत्वंचरितैर्विडंबयन् रेमेरमालालितपादपल्लवोग्राम्यैःसमंग्राम्यवदीशचेष्टितः १९ श्रीदामानामगोपालोराम केशवयोःसखा सुबलस्तोककृष्णाद्यागोपाःप्रेम्णेदमब्रुवन् २०

गोपैःसहवर्त्तमानःप्रीतमनारेमे ९ तामेवरतिमाह क्वचिदित्यादिदशभिः १० बर्हिणंनृत्यंतमनुअभिनृत्यति बर्हिणमपिमुखोनृत्यतीतिवा सखीन्हासयन् ११ १२ चकोरादीननुरुत्यरौति कदाचिच्चसत्वानांमध्येव्याघ्रसिंहयोःताभ्यां भीतवद्द्रवति सत्वेषुपलाय मानेषुपलायतइत्यर्थः तयोःसत्वानांबलोद्रेकाणांभीतवद्द्रवतीतिवा १३ आर्यमग्रजंविश्रमयतिविगतश्रमंकरोति १४ मिथोनृत्या दीन्कुर्वतोगोपान्प्रशशंसतुः १५ १६ व्यजनैःपल्लवादिनिर्मितैः १७ १८ ईशचेष्टितइति निगूढस्वभावत्वेऽपि अंतरांतराईशस्येवचेष्टितानि दृश्यंतेयस्मिन् सः १९ २०

दर्शनेच्छितस्तयेवदर्शयितुमाह श्रीदामेति स्लोक कृष्णःकश्चित् तालालिसकुलतालपंक्तिभिर्व्याप्तम् २१ २२ २३ २४ विपूचीनःसर्वत प्रसृत २५
२६ २७ २८ सनगसहसम २९ प्रत्यग्भ्याम्पापश्चिमाभ्याम्पाम् काशब्दभीतिगर्दभजातिशब्दानुकरणम् पर्यसरत् परितोधावदित्यर्थ ३० उपक्रोष्टा
गर्दभ पराक्रमतिमुरत्नअपरौपश्चिमौ कानापपलदतुम् ३१ तृणराज ताल ३२ ३३ उत्क्षेपेनस्वदेहेनहतैराहताश्वकपिरे अकपत ३४ यस्मिन्निदविश्वमोत

रामराममहाबाहोकृष्णदुष्टनिवर्हण इतोऽविदूरेसुमहद्वनंतालालिसकुलम् २१ फलानितत्रभूरीणिपतन्तिपतितानिच सन्तिकिन्त्व
वरुद्धानिधेनुकेनदुरात्मना २२ सोऽतिवीर्योऽसुरोरामहेकृष्णखररूपधृक् आत्मतुल्यबलैरन्यैर्ज्ञातिभिर्बहुभिर्वृत २३ तस्मात्कृतनरा
हाराद्भीतैर्नृभिरमित्रहन् नसेव्यतेपशुगणैःपक्षिसंघैर्विवर्जितम् २४ विद्यन्तेऽभुक्तपूर्वाणिफलानिसुरभीणिच एषवैसुरभिर्गन्धोविषू
चीनोऽवगृह्यते २५ प्रयच्छतानिनःकृष्णगन्धलोभितचेतसाम् वाञ्छाऽस्तिमहतीरामगम्यतांयदिरोचते २६ एवंसुहृद्वचःश्रुत्वा
सुहृत्प्रियचिकीर्षया प्रहस्यजग्मतुर्गोपैर्वृतौतालवनंप्रभू २७ बलःप्रविश्यबाहुभ्यांतालान्संपरिकम्पयन् फलानिपातयामासमत्त
गजइवौजसा २८ फलानांपततांशब्दंनिशम्यासुररासभ अभ्यधावत्क्षितितलंसनगंपरिकम्पयन् २९ समेत्यतरसाप्रत्यग्द्वाभ्यां
पद्भ्यांबलंबली निहत्योरसिकाशब्दंमुञ्चन्पर्यसरत्खल ३० पुनरासाद्यसंरब्धउपक्रोष्टापराक्स्थित चरणावपरौराजन्बला
यप्राक्षिपद्रुषा ३१ सतंगृहीत्वाप्रपदोर्भ्रामयित्वैकपाणिना चिक्षेपतृणराजाग्रेभ्रामणत्यक्तजीवितम् ३२ तेनाहतोमहातालोवे
पमानोमहाशिरा पार्श्वस्थंकम्पयन्भग्नःसचान्यंसोऽपिचापरम् ३३ बलस्यलीलयोत्सृष्टखरदेहहताहता तालाश्चकम्पिरेसर्वे
महावातेरिताइव ३४ नैतच्चित्रंभगवतित्यनन्तेजगदीश्वरे ओतप्रोतमिदंयस्मिंस्तन्तुष्वङ्गयथापट ३५ ततःकृष्णंचरामंचज्ञातयो
धेनुकस्यये क्रोष्टारोऽभ्यद्रवन्सर्वेसंरब्धाहतबान्धवा ३६ तांस्तानापततःकृष्णोरामश्चनृपलीलया गृहीतपश्चाच्चरणान्प्राहिणोत्तृ
णराजसु ३७ फलप्रकरसंकीर्णंदैत्यदेहैर्गतासुभि रराजभूसतालाग्रैर्घनैरिवनभस्तलम् ३८ तयोस्तत्सुमहत्कर्मनिशम्यवि
बुधादयः मुमुचुःपुष्पवर्षाणिचक्रुर्वाद्यानितुष्टुवु ३९ अथतालफलान्यादन्मनुष्यागतसाध्वसा तृणंचपशवश्चेरुर्हतधेनुककान
नने ४० कृष्णःकमलपत्राक्षःपुण्यश्रवणकीर्तन स्तूयमानोऽनुगैर्गोपैःसाग्रजोव्रजमाव्रजत् ४१ तंगोरजश्छुरितकुन्तलबद्धबर्ह
वन्यप्रसूनरुचिरेक्षणचारुहासम् वेणुंक्वणन्तमनुगैरनुगीतकीर्त्तिंगोप्योदिदृक्षितदृशोऽभ्यगमन्समेता ४२ ६७ ६५

मूर्ध्वतन्तुषुपटइवग्रथितम् प्रोततिर्यक्तन्तुषुपटवदेवसंग्रथितसर्वतोऽनुस्यूतंवर्तत इत्यर्थः ३५ ३६ ३७ घनैर्नभस्तलमिवभू रराज तत्रफलप्रकरस
कीर्णेति दैत्यदेहे फलतालाग्रैश्चसंकीर्णाइत्यरुणश्वेतनीलघनसादृश्यसंपादनम् ३८ ३९ आदन्नभक्षयन् ४० ४१ गोरजोभि छुरितेषुकुन्तलेषुब
द्धंबर्हंवन्यानिप्रसूनानिचयस्य रुचिरमीक्षणंचारुहासश्चयस्य तंचतंच दिदृक्षितदृशा दिदृक्षितंदर्शनोत्कण्ठायुक्तादृशोयासांता ४२ ६५

मुकुंदस्यमुखपद्मगतंसारघंमधुअक्षिभियोविरहस्तस्माज्जातंतापम् सचतासांसत्कृतिंपूजाम् कांसत्कृतिंकथंवाकृतांतामाह सव्रीडेति सव्रीडेनसलज्जेन हासेनविनयोयथाभवतितथायद्देतत् किंतत् अपांगमोक्षंकटाक्षदर्शनंच तथातांसत्कृतिंप्राप्येति ४३ ४४ ४५ ४६ ४७ ४८ ४९ ५० संप्रतिसद्यएवइताप्राप्तास्मृतिर्यैस्तेसंप्रतीतस्मृतयः यद्वा सम्यक्प्रतीताप्रतिप्राप्तास्मृतिर्यैस्तेतथाइति ५१ ५२ इतिदशमेटीकायांपंचदशोऽध्यायः १५

षोडशेकालियस्योक्तोनिग्रहोयमुनाह्रदे तत्पत्नीभिःस्तुतेनाथकृष्णेनानुग्रहःकृतः १ हत्वारासभदैतेयान्जग्ध्वातालफलान्यलम् प्रीतोऽनृत्य

पीत्वामुकुंदमुखसारघमक्षिभृंगैस्तापंजहुर्विरहजंव्रजयोषितोऽह्नि तत्सत्कृतिंसमधिगम्यविवेशगोष्ठंसव्रीडहासविनयंयदपांगमोक्षम् ४३ तयोर्यशोदारोहिण्यौपुत्रयोःपुत्रवत्सले यथाकामंयथाकालंव्यधत्तांपरमाशिषः ४४ गताध्वानश्रमौतत्रमज्जनोन्मर्दनादिभिः नीवींवसित्वारुचिरांदिव्यस्रग्गंधमंडितौ ४५ जनन्युपहृतंप्राश्यस्वाद्वन्नमुपलालितौ संविश्यवरशय्यायांसुखंसुषुपतुर्व्रजे ४६ एवंसभगवान्कृष्णोवृंदावनचरःक्वचित् ययौराममृतेराजन्कालिंदींसखिभिर्वृतः ४७ अथगावश्चगोपाश्चनिदाघातपपीडिताः दुष्टंजलंपपुस्तस्यास्तृषार्त्ताविषदूषितम् ४८ विषांभस्तदुपस्पृश्यदैवोपहतचेतसः निपेतुर्व्यसवःसर्वेसलिलांतेकुरूद्वह ४९ वीक्ष्यतान्वैतथाभूतान्कृष्णोयोगेश्वरेश्वरः ईक्षयाऽमृतवर्षिण्यास्वनाथान्समजीवयत् ५० तेसंप्रतीतस्मृतयःसमुत्थायजलांतिकात् आसन्सुविस्मिताःसर्वेवीक्षमाणाःपरस्परम् ५१ अन्वमंसततद्राजन्गोविंदानुग्रहेक्षितम् पीत्वाविषंपरेतस्यपुनरुत्थानमात्मनः ५२ इतिश्रीभाग०महा० दश० धेनुकवधोनामपंचदशोऽध्यायः १५ श्रीशुकउवाच विलोक्यदूषितांकृष्णांकृष्णःकृष्णाहिनाविभुः तस्याविशुद्धिमन्विच्छन्सर्पंतमुदवासयत् १ राजोवाच कथमंतर्जलेऽगाधेन्यगृह्णाद्भगवानहिम् सवैबहुयुगावासंयथाऽऽसीद्विप्रकथ्यताम् २ ब्रह्मन्भगवतस्तस्यभूम्नःस्वच्छंदवर्त्तिनः गोपालोदारचरितंकस्तृप्येतामृतंजुषन् ३ श्रीशुकउवाच कालिंद्यांकालियस्यासीद्ध्रदःकश्चिद्विषाग्निना श्रप्यमाणपयोयस्मिन्पतंत्युपरिगाःखगाः ४ विप्रुष्मताविषोदोर्मिमारुतेनाभिमर्शिताः म्रियंतेतीरगायस्यप्राणिनःस्थिरजंगमाः ५ तंचंडवेगविषवीर्यमवेक्ष्यतेनदुष्टांनदींचखलसंयमनावतारः कृष्णःकदंबमधिरुह्यततोऽतितुंगमास्फोट्यगाढरशनोन्यपतद्विषोदे ६

फणारंगेकालियस्यकलानिधिः २ उदवासयत्निःसारितवान् १ बहूनियुगान्यावासोयस्यतमहिम् सर्वेअहिःअजलचरोऽपितस्मिन्नंतर्जलेयथायेनप्रकारेणासीत् अथवाबहूनियुगानिआवासोयथाभवतितथातेनप्रकारेणसर्वैतत्रासीदितिकथ्यतामिति २ गोपालेनयदुदारमाचरितंतदेवामृतमनःकथ्यतामिति ३ श्रप्यमाणंपच्यमानंपयोयस्यसःअतउपरिगच्छतःखगायस्मिन्पतंति ४ किंच विप्रुष्मताअंबुकणयुक्तेनविषोदतरंगस्पर्शिमारुतेनस्पृष्टायस्यतीरगाम्रियंतेसह्रदआसीदिति ५ तंकालियंचंडोवेगोयस्यतत्विषमेववीर्यंयस्यतंकदंबमिति भाविनाश्रीकृष्णस्यचरणस्पर्शंप्राप्स्येनसएकस्तत्तीरेनशुष्कःअथवाऽमृतमाहरतागरुत्मताक्रांतत्वादितिचपुराणांतरं आस्फोट्यबाहुंकरतलेनाहत्य गाढादृढाबद्धारशनाकटिबंधनवस्त्रंयेनसः ६

तदासप्यस्यन्हृद पुरुषश्रेष्ठस्यपतनभारेणसंक्षोभितानामुरगाणांविषैरुन्ननोऽम्बुराशिर्यस्यस विषेणकषायीकृताभयकराऊर्मयोयस्यस पर्यक्प्लवित धनुः
शतप्लुत प्रसृत नैतच्चित्रमित्याह अनन्तबलस्येति ७ ह्रदेविहरतः भुजदण्डाहतोदकघोषंश्रुत्वातत स्वसदनाभिभवंनिरीक्ष्यतदसहमान सर्प समसरत्
समाजगाम ८ प्रेक्षणीयश्चसुकुमारश्चघनवदुज्ज्वलश्चतंश्रीवत्सपीतवसनंश्रीवत्सेनसंयुक्तमुज्ज्वलत्पीतवस्त्रंयस्यतम् भुजयाभोगेनचच्छाद अवेष्टयत्
९ सप्रियोयेषांतेतत्प्रिया तेचतेसखायश्चेति १० ११ भुविभूकम्पादय दिविउल्कापातादय आत्मनिवामनेत्रस्फुरणादय आसन्नभयशंसितुशीलयेषां

सर्पह्रदःपुरुषसारनिपातवेगसंक्षोभितोरगविषोच्छ्वसिताम्बुराशिः पर्यक्प्लुतोविषकषायविभीषणोर्मिर्धावन्धनुःशतमनन्तबलस्यकिं
तत् ७ तस्यह्रदेविहरतोभुजदण्डघूर्णवार्घोषमङ्गवरवारणविक्रमस्य आश्रुत्यतत्स्वसदनाभिभवंनिरीक्ष्यचक्षुःश्रवाःसमसरत्तदमृष्य
माणः ८ तंप्रेक्षणीयसुकुमारघनावदातंश्रीवत्सपीतवसनंस्मितसुन्दरास्यम् क्रीडन्तमप्रतिभयंकमलोदराङ्घ्रिंसंदश्यमर्मसुरुषाभुज
याचच्छाद ९ तंनागभोगपरिवीतमदृष्टचेष्टमालोक्यतत्प्रियसखाःपशुपाभृशार्त्ताः कृष्णेऽर्पितात्मसुहृदर्थकलत्रकामादुःखानु
शोकभयमूढधियोनिपेतुः १० गावोवृषावत्सतर्यःक्रन्दमानाःसुदुःखिताः कृष्णेन्यस्तेक्षणाभीतारुदन्त्यइवतस्थिरे ११ अथव्रजेमहो
त्पातास्त्रिविधाह्यतिदारुणाः उत्पेतुर्भुविदिव्यात्मन्यासन्नभयशंसिनः १२ तानालक्ष्यभयोद्विग्नागोपानन्दपुरोगमाः विनारामेणगाः
कृष्णंज्ञात्वाचारयितुंगतम् १३ तैर्दुर्निमित्तैर्निधनंमत्वाप्राप्तमतद्विदः तत्प्राणास्तन्मनस्कास्तेदुःखशोकभयातुराः १४ आबालवृद्धवनि
ताःसर्वेऽङ्गपशुवृत्तयः निर्जग्मुर्गोकुलाद्दीनाःकृष्णदर्शनलालसाः १५ तांस्तथाकातरान्वीक्ष्यभगवान्माधवोबलः प्रहस्यकिंचिन्नो
वाचप्रभावज्ञोऽनुजस्यसः १६ तेऽन्वेषमाणादयितंकृष्णंसूचितयापदैः भगवल्लक्षणैर्जग्मुःपदव्यायमुनातटम् १७ तेतत्रतत्राब्जय
वाङ्कुशाशनिध्वजोपपन्नानिपदानिविश्पतेः मार्गेगवामन्यपदान्तरान्तरेनिरीक्ष्यमाणाययुरङ्गसत्वराः १८ अन्तर्ह्रदेभुजगभोगपरीतमारात्
कृष्णंनिरीहमुपलभ्यजलाशयान्ते गोपांश्चमूढधिषणान्परितःपशूंश्चसंक्रन्दतःपरमकश्मलमापुरार्त्ताः १९ गोप्योऽनुरक्तमनसोभग
वत्यनन्तेतत्सौहृदस्मितविलोकगिरःस्मरन्त्यः ग्रस्तेऽहिनाप्रियतमेभृशदुःखतप्ताःशून्यंप्रियव्यतिहृतंददृशुस्त्रिलोकम् २० ताःकृष्ण
मातरमपत्यमनुप्रविष्टांतुल्यव्यथाःसमनुगृह्यशुचःस्रवन्त्यः तास्ताव्रजप्रियकथाःकथयन्त्यआसन्कृष्णाननेऽर्पितदृशोमृतकप्रतीकाः २१

ते १२ तानालक्ष्यगोकुलात् निर्जग्मुरितितृतीयेनान्वयः भयोद्विग्ना भयहेतुभ्योभीताः भयेनकम्पमानाइतिवा १३ नतद्विदतीतिअतद्विद् १४ पशुवृत्तयः अतिवत्सला १५
कातरान्भीतान् १६ भगवल्लक्षणयुक्तानिपदानितैः पदैःसूचितयापदव्यामार्गेण १७ पदैर्मार्गज्ञानप्रकारमाह तइतिविश्पते श्रीकृष्णस्यान्येषांपदानामंतरान्तरेमध्येमध्ये
तत्तद्गोहेनगवांश्रुतीनांमार्गेसत्वरा अभमत्वा योभिनःतत्तदुपरुद्धपादेनपयापरंतत्समृगयनेतद्दृष्टिभाव १८ ततश्चसर्पशरीरवेष्टितकृष्णाद्दूरान्निरीक्ष्यगोपा
श्चपशूंश्चतथानिरीक्ष्यार्त्ता परमकश्मलंपरमोहमापुः १९ प्रियेणश्रीकृष्णेनव्यतिहृतंविरहितंत्रैलोक्यंशून्यंददृशुः २० २१ ७ ७ ७ ७

२२अनन्यगतिमात्मानमित्थंनिरीक्ष्यातएवात्महेतोः स्वगोकुलमतिदुःखितमाज्ञायउरगबंधात्उदतिष्ठदित्यन्वयः २३ तस्यप्रख्यमानेनवपुषाव्यथितात्मशरीरोभुजंगःकुंड लीमुन्मुच्यतंत्यक्त्वाकुपितःफणानुन्नमय्यश्वसन्केवलमीक्षमाणस्तस्थौ कथंभूतः श्वसनरुंधेषुनासाविवरेषुविषंयस्यसतथा अंबरीषोमंडकपाकभाजनंतद्वत्स्तब्धानिईक्षणानियस्यसतथा उल्मुकानिमुखेषुयस्यसचसचसंचे २४ हरिश्चक्रीडंस्तमनुसर्पपरिससार परितोबभ्राम अतिकराला विषाग्नियुक्ता दृष्टिर्यस्यतम् जिह्वयाद्विशिखयेतिप्रतिमुखम् २५ एवंपरिभ्रमेणैवहतमोजोयस्यतम् तस्यमूर्द्धसुयेरत्ननिकरास्तेषांस्पर्शेनाताम्रंपादांबुजंयस्यसः ननुकथंचंचलेषुशिरस्सुनन्नर्त्ततत्राह अखिलकलानामादिगुरुः २६ २७ शतैकशीर्ष्णःशतमेकानिमुख्यानिशीर्षाणियस्यतस्य क्षीणायुषोऽपिपुनर्भ्रमतःयद्यच्छिरोननमतेस्तब्धतानज

कृष्णप्राणान्निर्विशंतोनंदादीन्वीक्ष्यतंन्हृदम् प्रत्यषेधत्सभगवान्रामःकृष्णानुभाववित् ३२ इत्थंस्वगोकुलमनन्यगतिंनिरीक्ष्यसस्त्रीकुमारमतिदुःखितमात्महेतोः आज्ञायमर्त्यपदवीमनुवर्तमानःस्थित्वामुहूर्त्तमुदतिष्ठदुरंगबंधात् २३ तत्प्रथ्यमानवपुषाव्यथितात्मभोगस्त्यक्त्वोन्नमय्यकुपितःस्वफणान्भुजंगः तस्थौश्वसन्श्वसनरंध्रविषांबरीषस्तब्धेक्षणोल्मुकमुखोहरिमीक्षमाणः २४ तंजिह्वयाद्विशिखयापरिलेलिहानंद्वेसृक्किणीह्यतिकरालविषाग्निदृष्टिम् क्रीडन्नमुंपरिससारयथाखगेंद्रोबभ्रामसोऽप्यवसरंप्रसमीक्षमाणः २५ एवंपरिभ्रमहतौजसमुन्नतांसमानम्यतत्पृथुशिरःस्वधिरूढआद्यः तन्मूर्द्धरत्ननिकरस्पर्शातिताम्रपादांबुजोऽखिलकलादिगुरुर्ननर्त्त २६ तन्नर्त्तुमुद्यतमवेक्ष्यतदातदीयगंधर्वसिद्धसुरचारणदेववध्वः प्रीत्यामृदंगपणवानकवाद्यगीतपुष्पोपहारनुतिभिःसहसोपसेदुः २७ यद्यच्छिरोननमतेऽगशतैकशीर्ष्णस्तत्तन्ममर्दखलदंडधरोऽघ्रिपातैः क्षीणायुषोभ्रमतउल्बणमास्यतोऽसृङ्नस्तोवमन्परमकश्मलमापनागः २८ तस्याक्षिभिर्गरलमुद्वमतःशिरस्सुयद्यत्समुन्नमतिनिःश्वसतोरुषोच्चैः नृत्यन्पदाऽनुनमयन्दमयांबभूवपुष्पैःप्रपूजितइवेहपुमान्पुराणः २९ तच्चित्रताडवविरुग्णफणातपत्रोरक्तंमुखैरुरुवमन्नृपभग्नगात्रः स्मृत्वाचराचरगुरुंपुरुषंपुराणंनारायणंतमरणंमनसाजगाम ३० कृष्णस्यगर्भजगतोऽतिभरावसन्नंपार्ष्णिप्रहारपरिरुग्णफणातपत्रम् दृष्ट्वाऽहिमाद्यमुपसेदुरमुष्यपत्न्यआर्त्ताःश्लथद्वसनभूषणकेशबंधाः ३१

हातिनृत्यच्छलेनांघ्रिपातैस्तंतन्ममर्द तदाचास्यतोमुखेभ्योनस्तोनासाविवरेभ्यश्चासृक्वमन् २८ पुनरपिरुषाउच्चैर्निःश्वसतोयद्यत्समुन्नमतितत्तत्पदाघातेनानुनमयन् इहअस्मिन्नवसरेहृष्टैर्गंधर्वादिभिः शेषासनःपुराणपुरुषइवयशोदानंदनःपुष्पैःप्रपूजितः यद्वा तदागंधर्वादिभिःपुष्पैःप्रपूजितोगोपैःपुराणःपुमानिवदृष्टइति यद्वा पुष्पैःप्रपूजितइवप्रसन्नःसन्दमयांबभूवहितंकृतवानित्यर्थः २९ अरणंशरणम् ३० गर्भेजगंतियस्यतस्यातिभरेणावसन्नमाक्रांतम् पार्ष्णिःपादपृष्ठम् आद्यंश्रीकृष्णम् श्लथंतोविस्रंसमानावसनादयोयासांताः ३१

ना शरणप्रपन्ना सत्य तमेवम् सुविग्नमनस अतिविह्वलचित्ता पुर्वाति तस्मिन्स्थानेजलाधस्ताद्धनीरणा शमलस्यपापात्मनोऽपिभर्त्तुर्मोक्षेप्सव भर्त्तुं
यत्नामन्तस्य भूतपतिं भाजिमानस्यपतिम् शरणदं मा अयमरम् ३२ प्रथमत्वकुपितभगवतदंडानुमोदनेनोपशमयन्त्य स्तुवन्ति न्याय्योहीति तन्नदंडा
नुमोदनपद्भिर्दशभिश्चहरे स्तुतिः प्रार्थनपञ्चभि श्लोकैस्तत पन्नगयोषिताम् नन्वनिग्रहानुग्रहलक्षणवैषम्यन्तवास्तीत्याह धत्सेदममिति अनुशासन आलो
चयन् ३३ निग्रहोप्यनुग्रहापेत्युक्तम् इदानीमनुग्रहएवायननिग्रह इत्याह अनुग्रहइति न अस्माकयस्मादमुष्यसर्पत्वं दृश्यते अतस्तन्मूलपापनिवर्त्तकोदंड-
अनुग्रहएव क्रोधत्वेनप्रतीयमानोऽपीत्यर्थ ३४ महान्भाग्यमनुग्रहइतितस्यपूर्वपुण्यमभिनन्दति तपइति स्वयंमानरहितेनान्येभ्योमानदेनच सर्वजीवयतीति
सर्वजीव ३५ नतपआदिनिमित्तएषभाग्योदय किन्त्वचिन्त्यतवकृपावैभवमित्याह श्लोकत्रयेण कस्यानुभावइति तपआदिनाप्रसादयोऽपियस्या श्रिय प्रसा
दामिच्छति साश्रीर्ललनाउत्तमास्त्रीयस्यत्वदंघ्रिस्पर्शाधिकारस्यवाछयातपआचरत् अस्यसर्पस्यसधिकृतवानितिकोवेत्तीत्यर्थ ३६ यत्तवपादरजःप्रपन्ना

तास्तंसुविग्नमनसाऽथपुरस्कृतार्भा कायंनिधायभुविभूतपतिंप्रणेमुः साध्व्य कृताञ्जलिपुटा शमलस्यभर्त्तुर्मोक्षेप्सव शरणदंशरणं
प्रपन्ना ३२ नागपत्न्यऊचुः न्याय्योहिदंड कृतकिल्बिषेऽस्मिंस्तवावतार खलनिग्रहाय रिपो सुतानामपितुल्यदृष्टेर्धत्से
दमफलमेवानुशंसन् ३३ अनुग्रहोऽयंभवताकृतोहिनोदंडोऽसतांतेखलुकल्मषापह यद्दंदशूकत्वममुष्यदेहिन क्रोधोऽपितेऽनुग्रहएव
संमतः ३४ तप सुतप्तंकिमनेनपूर्वंनिरस्तमानेनचमानदेन धर्मोऽथवासर्वजनानुकंपयायतोभवांस्तुष्यतिसर्वजीव ३५ कस्यानु-
भावोऽस्यनदेवविद्महेतवांघ्रिरेणुस्पर्शाधिकार यद्वाछयाश्रीर्ललनाचरत्तपोविहायकामान्सुचिरंधृतव्रता ३६ ननाकपृष्ठंनचसार्व
भौमंनपारमेष्ठ्यंनरसाधिपत्यम् नयोगसिद्धीरपुनर्भवंवावाञ्छंतियत्पादरजःप्रपन्ना ३७ तदेषनाथापदुरापमन्यैस्तमोजनि क्रोध
वशोऽप्यहीश संसारचक्रेभ्रमत शरीरिणोयदिच्छत स्याद्विभव समक्ष ३८ नमस्तुभ्यंभगवतेपुरुषायमहात्मने भूतावासाय
भूतायपरायपरमात्मने ३९ ज्ञानविज्ञाननिधयेब्रह्मणेऽनंतशक्तये अगुणायाविकारायनमस्तेप्राकृतायच ४०

मासा पारमेष्ठ्याद्यपितु
च्छंमन्यते ३७ अहोयदेषअयत्नतएवप्राप अन्यै श्रियादिभिरपि कथंभूतपादरज यदिच्छत सेव्यमेभवत्विति प्रार्थयमानस्यैवसमक्ष प्रत्यक्षएवविभव अपेक्षि
तार्थपद इति ३८ नमस्तुभ्यंभगवतेअचिन्त्यैश्वर्यादिगुणाय तदुपपादनाय इत्यादि श्लोकैर्विशेषणानि पुरुषाय सर्वेषु अन्तर्यामिरूपेणवर्त्तमानाय महात्मनेएवम
पिनातिपरिच्छिन्नाय कुतः भूतावासाय आकाशाद्याश्रयाय एवंदीपकुत भूतायपूर्वमपिसते कुत परायकारणाय किंच परमात्मनेकारणातीताय ३९ कारण
त्वकारणातीतत्वचसमर्थयितुमाह ज्ञानविज्ञाननिधये ज्ञानंज्ञप्ति विज्ञानंचिच्छक्ति उभयोर्निधये ताभ्यांपूर्णाय कथंतथात्वमतउक्तं ब्रह्मणेऽनंतशक्तये कथं
भूताय ब्रह्मणे अगुणाय अविकाराय कथंभूताय अनंतशक्तये प्राकृताय प्रकृतिप्रवर्तकाय अप्राकृतायइतिवा अप्राकृतायानंतशक्तियुक्ताय अयमर्थ अगुणत्वा
दविकारब्रह्मज्ञप्तिमात्रत्वात्कारणातीतम् प्रकृतिप्रवर्त्तकोऽनंतशक्तिर्विज्ञाननिधित्वादीश्वरः कारणंतदुभयात्मनेनमइति ४०

अनंतशक्तित्वात्कालशक्त्याविश्वस्यधृत्वादिरूपेणनमस्यंति कालायकालस्वरूपाय कालनाभायकालशक्त्याश्रयायकालावयवानांसृष्ट्यादिसमयानांसाक्षिणे तत्तश्चविश्वायविश्व
रूपाय तर्हि किंजडोऽहंनहितदुपद्रष्ट्रे नचद्रष्टृमात्राय किंतु तत्कर्त्रेनचकर्तृमात्राय विश्वहेतवेसर्वकारकरूपाय ४१ तदेवाहुः भूतमात्रेंद्रियप्रा
णमनोबुद्ध्याशयात्मने आशयश्चित्तम् भूतादिरूपायअतःसर्वकारकरूपायेति अहंकारात्मतयानमस्यति त्रिगुणेनेति एवंसृष्टिकार्येयस्त्रिगुणोऽभिमानस्तेनगूढास्वाश
भूतानामात्मनामनुभूतिर्येनतस्मै ४२ त्वंत्वहंकारानावृतइतिस्तुवंति नमोऽनंतायाहंकारापरिच्छेदादतः सूक्ष्मायादृश्यत्वात् अतएवकूटस्थायउपाधिकृतविकाराभावात्
अतएवविपश्चितेसर्वज्ञाय एवंवस्तुतःस्तुत्वाऽचिंत्यमायात्वेनस्तुवंति नानावादानुरोधाय अस्तिनास्तिसर्वज्ञः किंचिज्ज्ञः बद्धःमुक्तःएकःअनेकइत्यादिनानावादाननुरुण
द्धिमायया अनुवर्त्ततयस्तस्मै किंच वाच्यवाचकशक्तयेअभिधानाभिधेयशक्तिभेदादपिनानात्वेनप्रतीयमानायेत्यर्थः ४३ अनावृतत्वमेवहेत्वंतरेणापिसूचयंत्यः स्तुवंति
नमःप्रमाणमूलाय चक्षुरादीनांचक्षुरादिरूपाय अतएवकवयेस्वयंतन्निरपेक्षज्ञानाय कुतः शास्त्रयोनयेवेदात्मकनिःश्वासाय किंच प्रवृत्तायनिवृत्तायनिगमायनमोनमः
४४ किंच अनावृत्तैश्वर्यत्वादेवचतुर्मूर्तिरूपेणसर्वोपास्यत्वेननमंति नमःकृष्णायेतिश्लोकेन रामायसंकर्षणायवसुदेवसुतायच वसुदेवशब्दितंशुद्धंसत्वंतत्रप्रकाशमा

कालायकालनाभायकालावयवसाक्षिणे विश्वायतदुपद्रष्ट्रेतत्कर्त्रेविश्वहेतवे ४१ भूतमात्रेंद्रियप्राणमनोबुद्ध्याशयात्मने
त्रिगुणेनाभिमानेनगूढस्वात्मानुभूतये ४२ नमोऽनंतायसूक्ष्मायकूटस्थायविपश्चिते नानावादानुरोधायवाच्यवाचकशक्तये ४३
नमःप्रमाणमूलायकवयेशास्त्रयोनये प्रवृत्तायनिवृत्तायनिगमायनमोनमः ४४ नमःकृष्णायरामायवसुदेवसुतायच प्रद्युम्नायानिरु
द्धायसात्वतांपतयेनमः ४५ नमोगुणप्रदीपायगुणात्मच्छादनायच गुणवृत्त्युपलक्ष्यायगुणद्रष्ट्रेस्वसंविदे ४६ अव्याकृतविहारायस
र्वव्याकृतसिद्धये हृषीकेशनमस्तेऽस्तुमुनयेमौनशीलिने ४७

नायवासुदेवायेत्यर्थः सात्वतामुपासकानांपतयेसालोक्यादिनापालकाय एवंचतुर्मूर्त्तयेकृष्णायतुभ्यंनमइति ४५ कथंचतुर्मूर्त्तित्वेतितदाहुः नमोगुणप्रदीपा
येति गुणाःअंतःकरणानितानिप्रदीपयतिप्रकाशयतीतितथा तस्मैचित्ताद्यधिष्ठातृत्वेनचतुर्मूर्तित्वाइत्यर्थः ननुतथाऽपिएकस्यैवकथंचतुष्ट्वमतआहुःगुणा
त्मच्छादनाय तैरेवगुणैरुपासकानांफलवैचित्र्यायात्मानमाच्छाद्यनानात्वेनप्रकाशमानायेत्यर्थः ननुतर्हिकथंप्रतीतिरतउक्तम् गुणवृत्त्युपलक्ष्यायचित्तादीनां
चेतनाध्यवसायादिवृत्तिभिरुपलक्ष्याय उपलक्षणमेवाहुः गुणद्रष्ट्रेतत्साक्षिणेकथंचिदुपलक्ष्यएव नज्ञेयइत्याहुः स्वसंविदेअगोचरायेत्यर्थः ४६ अगोचरत्वमु
पलक्ष्यत्वंचदर्शयंत्योनमंति अव्याकृतविहारायअतर्क्यमहिम्नइत्यर्थः सर्वव्याकृतसिद्धये सर्वकार्योत्पत्तिप्रकाशहेतुत्वेनोपलक्षणयोग्यायेत्यर्थः उपलक्षणांतर
माहुः हेहृषीकेशकरणप्रवर्त्तक किंविषयलिप्सया नमुनयेआत्मारामाय किंसाधनवशेनवा नहिमौनशीलिने मौनमात्मारामता तत्स्वभावाय ४७
श्रीगोपीजनवल्लभायगोपालायमुनिजनमानसायनमोस्तु

।पू

कुत परावरगतिज्ञायस्थूलसूक्ष्माणांगतिज्ञत्वेननक्वापिसज्जमानायेत्यर्थः अपिच सर्वाध्यक्षाय सर्वस्याधिष्ठात्रे कुतएतत् अविश्वाय न विश्वंयस्मिन् तन्निषेधावध
येविश्वायननाहृत्तोधिष्ठानायेत्यर्थः किंच तद्द्रष्ट्रे अध्यासापवादसाक्षिणे अपिच अस्यविश्वाध्यासस्यतदपवादस्य चाविद्याविद्याभ्यां हेतवे यद्वा अवि
श्वायविश्वतैजसाद्यवस्थारहिताय विश्वायचसर्वपर्यायास्वाश्रौत्तन्तत्स्वस्थाय तद्द्रष्ट्रे तासामवस्थानाभावाभावसाक्षिणे अन्यत्समानम् तस्मात्सर्वगतिज्ञत्वसर्वा
धिष्ठातृत्वात्मारामत्वादिभिर्निरतिशयैश्वर्यायतुभ्यंनमइति विशेषणैरसंकीर्णं पंचपंचाशतानुतः अहिस्त्रीभिः प्रसन्नोस्त्वास्मामिवभगवन्हरे ४८ एवंनाथ
हृद्गुणैर्द्वेनेननमस्कारैश्च भगवन्प्रसाद्य इदानींलब्धानांप्राणिनांकोपापराधत्व्याशयवत्त्व प्रार्थयते त्वंहीति अस्यलोकस्यजन्मादिलक्षणअकृतप्रकृते ततश्च
तांस्तान्संस्काररूपेणसत स्वभावान्घोरसत्वादीन्प्रतिबोधयन्नीहसे क्रीडसि यद्वा अस्यजन्मादींस्त्वमीहसइत्यन्वयः कथंभूत अकृता अनादियाकाल

परावरगतिज्ञायसर्वाध्यक्षायतेनमः अविश्वायचविश्वायतद्द्रष्ट्रेऽस्यचहेतवे ४८ त्वंह्यस्यजन्मस्थितिसंयमान्प्रभोगुणैरनीहोऽ
कृतकालशक्तिधृक् तत्तत्स्वभावान्प्रतिबोधयन्सतः समीक्षयाऽमोघविहारईहसे ४९ तस्यैवतेऽमूस्तनवस्त्रिलोक्यांशान्ताअशान्ता
उतमूढयोनयः शान्ताःप्रियास्तेह्यधुनाऽवितुंसतांस्थातुश्चतेधर्मपरीप्सयेहतः ५० अनुगृह्णीष्वभगवन्प्राणांस्त्यजतिपन्नगः स्त्री
णांनः साधुशोच्यानांपतिःप्राणः प्रदीयताम् ५१ अपराधः सकृद्भर्त्रासोढव्यः स्वप्रजाकृतः क्षन्तुमर्हसिशान्तात्मन्मूढस्यत्वामजानतः
५२ विधेहितेकिंकरीणामनुष्ठेयंतवाज्ञया यच्छ्रद्धयाऽनुतिष्ठन्वैमुच्यतेसर्वतोभयात् ५३ श्रीशुकउवाच इत्थंसनाग
पत्नीभिर्भगवान्समभिष्टुतः मूर्च्छितंभग्नशिरसंविससर्जाङ्घ्रिकुट्टनैः ५४ प्रतिलब्धेन्द्रियप्राणः कालियः शनकैर्हरिम् कृच्छ्रात्समु
च्छ्वसन्दीनः कृष्णंप्राहकृताञ्जलिः ५५ वयंखलाः सहोत्पत्त्यातामसादीर्घमन्यवः स्वभावोदुस्त्यजोनाथलोकानांयदसद्ग्रहः ५६ त्वया
सृष्टमिदंविश्वंधातर्गुणविसर्जनम् नानास्वभाववीर्यौजोयोनिबीजाशयाकृति ५७ वयंचतत्रभगवन्सर्पाजात्युरुमन्यवः कथंत्य
जामस्त्वन्मायांदुस्त्यजांमोहिताः स्वयम् ५८ भवान्हिकारणंतत्रसर्वज्ञोजगदीश्वरः अनुग्रहंनिग्रहंवामन्यसेतद्विधेहिनः ५९
श्रीशुकउवाच इत्याकर्ण्यवचः प्राहभगवान्कार्यमानुषः नात्रस्थेयंत्वयासर्पसमुद्रंयाहिमाचिरम् ६०

शक्तिस्ताधारयतीतितथाभूत्यतत्समानम् ४९ अतस्तस्यतवैवामूस्तनवस्तन्पतइति तनवः क्रीडोपस्कराः तथापितवाधुनाशान्ताः प्रियाः कुतः सतांधर्म
परिपालनेच्छयाईहतः प्रवर्तमानस्यातस्तानवितुंस्थातुं स्थितस्य ५० ५१ एवंतवाप्रियाचरणादपराधस्ताईसोढव्यइति ५२ सुप्रद्नुग्रहेऽन्येषामृत्यु
रेवेतिचेत्तत्राहु विधेहीति तवाज्ञयाप्राणिनोनायायेतिभाव ५३ ५४ ५५ यदसद्ग्रहइति यत स्वभावोऽसद्ग्रहरूप यद्वा यतः स्वभावादस
तिदेहादौयोग्रह सद्दुस्त्यजइति ५६ गुणैर्विविधवर्पासृजनइतिगुणविसर्जनंतत्रापिनानास्वभावाद्योयस्यतत् ५७ जात्याजन्मनैवउरुमन्युर्येषांतेवयं
कथंत्यजाम ५८ हियस्मात्तत्रत्वन्मायात्यागेभवानेवकारणमिति अनुग्रहंविधेहिभमाज्ञयापारवादलीविईश्वरस्त्वान्निग्रहंवाविधेहीति ५९ ६० ६५

यतोगोभिर्नृभिश्चनदीभुज्यतामिति ६१ नयुष्मत्तोभयमाप्नुयात् तस्ययुष्माभिर्भयंनोत्पादनीयमित्याज्ञा इतोऽपित्वयानिर्गंतव्यमित्याह योऽस्मिन्निति त्वयि स्थितेतन्नसंभवतीतिभावः ६२ नन्वतत्रगरुडभयंभवेदित्याह द्वीपमिति ६३ ६४ ६५ ६६ ६७ इतिदशमेटीकायांषोडशोऽध्यायः १६ नागंसपदशोनागालयंतंनिरयापयत् बंधून्स्वदुःखतःश्रांतान्कृतांस्तत्रदयादपात् १ असमंजसमप्रियम् १ उपहार्यैःभक्ष्यैः सर्पजनैःसर्पायत्तैर्जनैः वानस्पत्यःवनस्पतेर्मूलेदेयःनागानांतद्बाधापरिहाराययोबलिर्निरूपितःउपकल्पितः २ तेचनागाःस्वंस्वंभागंजनैर्दत्तंसुपर्णायप्रयच्छंति ततोभीताःगोपीथाय

स्वज्ञात्यपत्यदाराढ्योगोनृभिर्भुज्यतांनदी यएतत्संस्मरेन्मर्त्यस्तुभ्यंमदनुशासनम् ६१ कीर्त्तयन्नुभयोःसंध्योर्नयुष्मद्भयमाप्नुयात् योऽस्मिन्स्नात्वामदाक्रीडेदेवादींस्तर्पयेज्जलैः ६२ उपोष्यमांस्मरन्नर्चेत्सर्वपापैःप्रमुच्यते द्वीपंरमणकंहित्वाह्रदमेतमुपाश्रितः यद्भयात्ससुपर्णस्त्वांनाद्यान्मत्पादलांछितम् ६३ ऋषिरुवाच एवमुक्तोभगवताकृष्णेनाद्भुतकर्मणा तंपूजयामास मुदानागपत्न्यश्चसादरम् ६४ दिव्यांबरस्रङ्मणिभिःपरार्ध्यैरपिभूषणैः दिव्यगंधानुलेपैश्चमहत्योत्पलमालया ६५ पूजयित्वा जगन्नाथंप्रसाद्यगरुडध्वजम् ततःप्रीतोऽभ्यनुज्ञातःपरिक्रम्याभिवंद्यतम् ६६ सकलत्रसुहृत्पुत्रोद्वीपमब्धेर्जगामह तदैवसामृतजलायमुनानिर्विषाभवत् अनुग्रहाद्भगवतःक्रीडामानुषरूपिणः ६७ इतिश्रीभाग॰ महा॰ दश॰ कालियनिर्यापणंनाम षोडशोऽध्यायः १६ राजोवाच नागालयंरमणकंकस्मात्तत्याजकालियः कृतंकिंवासुपर्णस्यतेनैकेनासमंजसम् १ श्रीशुकउवाच उपहार्यैःसर्पजनैर्मासिमासीहयोबलिः वानस्पत्योमहाबाहोनागानांप्राक्निरूपितः २ स्वंस्वंभागंप्रयच्छंतिनागाः पर्वणिपर्वणि गोपीथायात्मनःसर्वेसुपर्णायमहात्मने ३ विषवीर्यमदाविष्टःकाद्रवेयस्तुकालियः कदर्थीकृत्यगरुडंस्वयंतंबुभुजेबलिम् ४ तच्छ्रुत्वाकुपितोराजन्भगवान्भगवत्प्रियः विजिघांसुर्महावेगःकालियंसमुपाद्रवत् ५ तमापतंतंतरसाविषायुधःप्रत्यभ्ययादुच्छ्रितनैकमस्तकः दद्भिःसुपर्णंव्यदशद्ददायुधःकरालजिह्वोच्छ्वसितोग्रलोचनः ६ ततार्क्ष्यपुत्रःसनिरस्यमन्युमान्प्रचंडवेगोमधुसूदनासनः पक्षेणसव्येनहिरण्यरोचिषाजघानकद्रुसुतमुग्रविक्रमः ७ सुपर्णपक्षाभिहतःकालियोऽतीवविह्वलः ह्रदंविवेशकालिंद्यास्तदगम्यंदुरासदम् ८ तत्रैकदाजलचरंगरुडोभक्ष्यमीप्सितम् निवारितःसौभरिणाप्रसह्यक्षुधितोऽहरत् ९

रक्षणाय ३ विषवीर्याभ्यांयोमदःतेनाविष्टःकाद्रवेयःकद्रुपुत्रोगरुडंकदर्थीकृत्य अविगणय्य यद्वा उपहार्यैःसुपर्णभक्ष्यैः सर्पाएवजनास्तैर्नागानांसंबंधीयस्मिन्नेकैकोनागोदीयते तथाभूतोयोबलिःसुपर्णायनिरूपितःतत्रस्वस्वंभागंसर्वेनागाःप्रयच्छंति कालियस्तुनप्रयच्छति किंत्वन्यैर्दत्तमपितंबलिंस्वयमेवबुभुजे ४ ५ विषमेवायुधंयस्यसः प्रत्यभ्ययात् योद्धुंप्रतिजगाम उच्छ्रितनैकमस्तकःउन्नमितानेकफणःदद्दायुधःदत्तायुधः करालजिह्वश्चासावुच्छ्वसितोग्रलोचनश्च उच्छ्वसितानिउज्जृंभितानिउग्राणिलोचनानियस्यसः ६ तार्क्ष्यपुत्रोगरुडःमधुसूदनस्यासनं यस्मिन्सः ७ तस्यगरुडस्यअगम्यमगाधतयादुरासदम् ८ तदगम्यत्वेकारणमाह तत्रैति

निवारितोऽपि ९

५

१० ११ नेलिह सर्प अतस्तत्रावसत् १२ जाम्बूनदस्वर्णं तेनालंकृतम् १३ असव इंद्रियाणिप्रमोदनिभृतात्मानः आनंदपूर्णमनसः १४ लब्धेहा लब्धचेष्ट
१५ गाः वृक्षाअपिपूर्वंशुष्काः सन्तः सद्यएवविरूढाइत्यर्थः १६ नेविप्रऊचुः १७ १८ नष्टलब्धधनानष्टप्रायापुनर्लब्धाप्रजायस्याःसा १९ श्रमेणचकर्शिता
उपकूलत कूलमाते २० २१ २२ २३ कालाग्ने मृत्युरूपादग्नेः नमृत्योर्बिभीम किंतु त्वच्चरणवियोगाद्दुःखात् नशक्नुमइति २४ २५ विमोहानहिंद
डेनतत्र स्वशरणागतान् गोपानपादनतोऽसावनंतवनवह्निं १ इतिदशमेटीकायांसप्तदशोऽध्यायः १७ अष्टादशेततोग्रीष्मेवसंतगुणलक्षिते अथात

मीनान्सुदन्सितान्भक्ष्यादीनान्मीनपतौहते कृपयासौभरिः प्राहतत्रत्यक्षेममाचरन् १० अंतःप्रविश्ययदिगरुडोमत्स्यान्सखादति
सद्यःप्राणैर्वियुज्येतसत्यमेतद्ब्रवीम्यहम् ११ तंकालियःपरंवेदनान्यःकश्चनलेलिह अवात्सीद्गरुडाद्भीतः कृष्णेनचविवासित १२ कृष्णं
ह्रदाद्विनिष्क्रांतंदिव्यस्रग्गंधवाससम् महामणिगणाकीर्णंजाम्बूनदपरिष्कृतम् १३ उपलभ्योत्थिताः सर्वेलब्धप्राणाइवासवः प्रमोदनि
भृतात्मानोगोपाः प्रीत्याऽभिरेभिरे १४ यशोदारोहिणीनंदोगोप्योगोपाश्चकौरव कृष्णंसमेत्यलब्धेहाआसन्लब्धमनोरथाः १५ राम
श्चाच्युतमालिंग्यजहासास्यानुभाववित् नगागावोवृषावत्सालेभिरेपरमांमुदम् १६ नंदंविप्राः समागत्यगुरवःसकलत्रकाः ऊचु
स्तेकालियग्रस्तोदिष्ट्यामुक्तस्तवात्मज १७ देहिदानंद्विजातीनांकृष्णनिर्मुक्तिहेतवे नंदःप्रीतमनाराजन्गाः सुवर्णंतदाऽदिशत्
१८ यशोदाऽपिमहाभागानष्टलब्धप्रजासती परिष्वज्यांकमारोप्यमुमोचाश्रुकलांमुहुः १९ तांरात्रिंतत्रराजेंद्रक्षुत्तृड्भ्यांश्रमकर्शि
ता ऊषुर्व्रजौकसोगावः कालिंद्याउपकूलतः २० तदाशुचिवनोद्भूतोदावाग्निः सर्वतोव्रजम् सुप्तंनिशीथआवृत्यप्रदग्धुमुपचक्रमे
२१ ततउत्थायसंभ्रांतादह्यमानाव्रजौकसः कृष्णंययुस्तेशरणंमायामनुजमीश्वरम् २२ कृष्णकृष्णमहाभागहेरामामितविक्रम
एषघोरतमोवह्निस्तावकान्ग्रसतेहिनः २३ सुदुस्तरान्नःस्वान्पाहिकालाग्नेःसुहृदःप्रभो नशक्नुमस्त्वच्चरणंसंत्यक्तुमकुतोभय
म् २४ इत्थंस्वजनवैक्लव्यंनिरीक्ष्यजगदीश्वरः तमग्निमपिबत्तीव्रमनंतोऽनंतशक्तिधृक् २५ इतिश्रीभाग॰महा॰दश॰कालि
यदमनोनामसप्तदशोऽध्यायः १७ श्रीशुकउवाच अथकृष्णःपरिवृतोज्ञातिभिर्मुदितात्मभिः अनुगीयमानोन्यविशद्व्रज
गोकुलमंडितम् १ व्रजेविक्रीडतोरेवंगोपालच्छद्ममायया ग्रीष्मोनामर्तुरभवन्नातिप्रेयान्शरीरिणाम् २ सचवृंदावनगुणैर्वसंत
इवलक्षितः यत्रास्तेभगवान्साक्षाद्रामेणसहकेशवः ३ यत्रनिर्झरनिर्ह्रादनिवृत्तस्वनझिल्लिकम् शश्वत्तच्छीकरर्जीपद्रुममंडलमंडितम्

यद्बलेनालंप्रलंबलीलयाहरि १ कृतान्नृत्यफणाग्रेषुकालियस्यसकौतुकम् वलप्रलंबनुगासयायाहयस्यानिहा २ १ गोपालच्छद्ममायया गोपालनर्मैव
च्छद्मयस्यातयामायया २ ३ वसंतसाम्यमाह यत्रग्रीष्मेऽपिनिर्झराणांनिर्ह्रादेनघोषेणनिवृत्तस्वना उन्नध्वनयोझिल्लिकाः कठोरध्वनिसूक्ष्मकीटा
यस्मिन्तथाभूतंवृंदावनंभवति किंच शश्वत्तेषांनिर्झराणांशीकरैरम्बुकणैर्ऋजीषाः स्निग्धायेद्रुमास्तेषांमंडलेमंडितम् ४ ५ ६ ७

यत्रग्रीष्मेवनेवानिदाघोग्रीष्मस्तेनतत्कालीनवह्न्यर्काभ्यांचभवति योदवस्तापः अतिशाद्वलेअतिहरिततृणाकीर्णे यद्वा अतिक्रांतशाद्वलेऽपिस्थाने ५ ननुशाद्व
लमेवकुतस्त्यंतत्राह अगाधेति अगाधानितोयानियासांतासांह्रदिनीनांतटस्पर्शिभिरूर्मिभिः पुलिनैः सह द्रवत्पुरीषंपकोयस्यास्तस्याभुवः रसंशाद्वलितंशाद्व
लरूपतांचविषवदुल्बणाअपिसूर्यरश्मयोनगृह्णते नहरंति ६ तद्वनमविशदित्युत्तरेणान्वयः नदंतः चित्रामृगद्विजाश्चयस्मिन् गायंतोमयूराभ्रमराश्चयस्मि
न् कूजंतःकोकिलाःसारसाश्चयस्मिन् तत् अविशत् ७ ८ ९ १० ११ काकपक्षाः चूडाकरणात्प्राक्तनकेशाः भ्रामणादिप्रकारैर्नियुद्धेन बाहुयुद्धेनचिक्रीड

सरित्सरःप्रस्रवणोर्मिवायुनाकल्हारकंजोत्पलरेणुहारिणा । नविद्यतेयत्रवनौकसांदवोनिदाघवह्न्यर्कभवोऽतिशाद्वले ५ अगाध
तोयह्रदिनीतटोर्मिभिर्द्रवत्पुरीष्याःपुलिनैःसमंततः नयत्रचंडांशुकराविषोल्बणाभुवोरसंशाद्वलितंचगृह्णते ६ वनंकुसुमितंश्रीम
न्नदच्चित्रमृगद्विजम् गायन्मयूरभ्रमरकूजत्कोकिलसारसम् ७ क्रीडिष्यमाणस्तत्कृष्णोभगवान्बलसंयुतः वेणुंविरणयन्गोपै
र्गोधनैःसंवृतोऽविशत् ८ प्रवालबर्हस्तबकस्रग्धातुकृतभूषणाः रामकृष्णादयोगोपाननृतुर्युयुधुर्जगुः ९ कृष्णस्यनृत्यतःकेचिज्ज
गुःकेचिदवादयन् वेणुपाणितलैःशृंगैःप्रशशंसुरथापरे १० गोपजातिप्रतिच्छन्नादेवागोपालरूपिणः ईडिरेकृष्णरामौचनटाइवन
टंनृप ११ भ्रामणैर्लंघनैःक्षेपैरास्फोटनविकर्षणैः चिक्रीडतुर्नियुद्धेनकाकपक्षधरौक्वचित् १२ क्वचिन्नृत्यत्सुचान्येषुगायकौवा
दकौस्वयम् शशंसतुर्महाराजसाधुसाध्वितिवादिनौ १३ क्वचिद्बिल्वैःक्वचित्कुंभैःक्वचामलकमुष्टिभिः अस्पृश्यनेत्रबंधाद्यैःक्वचि
न्मृगखगेहया १४ क्वचिच्चदर्दुरप्लावैर्विविधैरुपहासकैः कदाचित्स्पंदोलिकयाकर्हिचिन्नृपचेष्टया १५ एवंतौलोकसिद्धाभिःक्रीडा
भिश्चेरतुर्वने नद्यद्रिद्रोणिकुंजेषुकाननेषुसरस्सुच १६ पशूंश्चारयतोर्गोपैस्तद्वनेरामकृष्णयोः गोपरूपीप्रलंबोऽगादसुरस्तज्जिही
र्षया १७ तंविद्वानपिदाशार्होभगवान्सर्वदर्शनः अन्वमोदततत्सख्यंवधंतस्यविचिंतयन् १८ तत्रोपाहूयगोपालान्कृष्णःप्राहवि
हारवित् हेगोपाविहरिष्यामोद्वंद्वीभूययथायथम् १९ तत्रचक्रुःपरिवृढौगोपारामजनार्दनौ कृष्णसंघट्टिनःकेचिदासन्रामस्यचाप
रे २० आचेरुर्विविधाःक्रीडावाह्यवाहकलक्षणाः यत्रारोहंतिजेतारोवहंतिचपराजिताः २१ वहंतोवाह्यमानाश्चचारयंतश्चगोधनम्
भांडीरकंवटंनामजग्मुःकृष्णपुरोगमाः २२ रामसंघट्टिनोयर्हिश्रीदामवृषभादयः क्रीडायांजयिनस्तांस्तानूहुःकृष्णादयोनृप २३ उवाह
कृष्णोभगवान्श्रीदामानंपराजितः वृषभंभद्रसेनस्तुप्रलंबोरोहिणीसुतम् २४ अविषह्यंमन्यमानःकृष्णंदानवपुंगवः वहन्द्रुततरंप्रागादव
रोहणतःपरम् २५

तुः १२ १३ कुंभैः कुंभवृक्षफलैः अस्पृश्यत्वंनेत्रबंधश्चतदाद्यैर्मृगाणांखगानांचचेष्टया १४ दर्दुरप्लावैः मंडूकप्लुतिभिः स्पंदोलिकया दोलालंब
नेन नृपाणामिवलीलया १५ नद्यः अद्रिद्रोणयः कुंजानिच येषु १६ चारयतोः सतोः तद्वने तस्मिन्वने तयोर्जिहीर्षया १७ १८ यथायथंवयोबलाद्यनुरूपंद्वंद्वीभूय १९ प
रिवृढौनायकौ तत्रकेचनकृष्णसंघट्टिनः कृष्णपक्षीयाः २० २१ वाह्यमानाः पृष्ठेनोह्यमानाः २२ २३ २४ कृष्णदृष्टिलंघनाय अवरुह्यतेऽस्मिन्नित्यवरोहणंमर्यादा ततःपरं
दूरमगात् २५

१० ११ कृच्छ्रात् गक्षप्रवेशकृत्तृट्श्रमादिजनितात् १२ क्षणेनैव भांडीरं प्रापिताः ततः अक्षीण्युन्मील्य विस्मिताः १३ १४ १५ १६ श्रीदामादिस्वगोपानां स्वांगमारुह्य तृष्यताम् स्वैश्वर्यमाविरकरोद्वनवह्निनिपानतः १ इति दशमे टीकायामेकोनविंशोऽध्यायः १९ विंशे प्रावृट्शरच्छोभावर्णनेन वनोचिताः प्रावृट्क्रीडा निरूप्यंते गोपरामयुजो हरेः १ हेयादेयोपमानेन प्रावृट्शरदृतुश्रियोः वर्णनं त्वद्भुतैश्वर्यकृष्णलीलाविवक्षया २ १ ३ तत्र प्रावृड्वर्णनं तत आदिह्य— विंशत्या सर्वेषां प्राणिनां समुद्भव उत्पत्तिस्तो जीवनं तच्च यस्यां सा प्रावृट् विद्योतमानाः परिधयः परिवेषाः दिशो वा यस्यां सा विस्फूर्जितं संक्षुभितं नभस्तलं यस्यां सा ३ सांद्रैर्निबिडैर्नीलांबुदैर्विद्युद्गर्जितसहितैराच्छन्नं सगुणं गुणैराच्छन्नं जीवाख्यं विद्युद्गर्जितांबुदानां सत्त्वरजस्तमोभिरुपमा ४ पर्जन्यः सूर्यः स्वगोभिः रश्मिभिः काले

नूनं त्वद्बांधवाः कृष्ण न चार्हंत्यवसीदितुम् वयं हि सर्वधर्मज्ञ त्वन्नाथास्त्वत्परायणाः १० श्रीशुक उवाच वचो निशम्य कृपणं बंधूनां भगवान्हरिः निमीलयत माभैष्ट लोचनानीत्यभाषत ११ तथेति मीलिताक्षेषु भगवानग्निमुल्बणम् पीत्वा मुखेन तान्कृच्छ्राद्योगाधीशो व्यमोचयत् १२ ततश्च तेऽक्षीण्युन्मील्य पुनर्भांडीरमापिताः निशाम्य विस्मिता आसन्नात्मानं गाश्च मोचिताः १३ कृष्णस्य योगवीर्यं तद्योगमायानुभावितम् दावाग्नेरात्मनः क्षेमं वीक्ष्य ते मेनिरेऽमरम् १४ गाः संनिवर्त्य सायाह्ने सहरामो जनार्दनः वेणुं विरणयन्गोष्ठमगाद्गोपैरभिष्टुतः १५ गोपीनां परमानंद आसीद्गोविंददर्शने क्षणं युगशतमिव यासां येन विनाऽभवत् १६ इति श्री भाग० मह० दश० दावाग्निपाननाम एकोनविंशोऽध्यायः १९ श्रीशुक उवाच तयोस्तदद्भुतं कर्म दावाग्नेर्मोक्षमात्मनः गोपाः स्त्रीभ्यः समाचख्युः प्रलंबवधमेव च १ गोपवृद्धाश्च गोप्यश्च तदुपाकर्ण्य विस्मिताः मेनिरे देवप्रवरौ कृष्णरामौ व्रजं गतौ २ ततः प्रावर्तत प्रावृट् सर्वसत्त्वसमुद्भवा विद्योतमानपरिधिर्विस्फूर्जितनभस्तला ३ सांद्रनीलांबुदैर्व्योम सविद्युत्स्तनयित्नुभिः अस्पष्टज्योतिराच्छन्नं ब्रह्मेव सगुणं बभौ ४ अष्टौ मासान्निपीतं यद्भूम्याश्चोदमयं वसु स्वगोभिर्मोक्तुमारेभे पर्जन्यः काल आगते ५ तडिद्वंतो महामेघाश्चंडश्वसनवेपिताः प्रीणनं जीवनं ह्यस्य मुमुचुः करुणा इव ६ तपःकृशा देवमीढा आसीद्वर्षीयसी मही यथैव काम्यतपसस्तनुः संप्राप्य तत्फलम् ७ निशामुखेषु खद्योतास्तमसा भांति न ग्रहाः यथा पापेन पाखंडा न हि वेदाः कलौ युगे ८ श्रुत्वा पर्जन्यनिनदं मंडूका व्यसृजन्गिरः तूष्णीं शयानाः प्राग्यद्वद्ब्राह्मणा नियमात्यये ९ आसन्नुत्पथवाहिन्यः क्षुद्रनद्योऽनुशुष्यतीः पुंसो यथाऽस्वतंत्रस्य देहद्रविणसंपदः १०

यथोचितसमये अन्नराजोपमा करादानतः समये पुनर्दानतश्च सूचिता ५ अस्य विश्वस्य प्राणनमाप्यायनकरं जीवनमुदकं मुमुचुः कृपालवो यथा तप्तं जनं निरीक्ष्यानुकंपमानाः तदाप्यायनाय स्वजीवनमपि त्यजंति तद्वन्महांतो मेघास्तडिन्नेत्रैर्विश्वं तप्तं निरीक्ष्य वायुभिर्वेपिता जीवनं मुमुचुरिति ६ तपसा ग्रीष्मेण कृशा देवमीढा पर्जन्यसिक्ता वर्षीयसी उच्छूना पुष्टा काम्यतपो यस्य तस्य तनुः कामान् संप्राप्य यथेति ७ ८ नित्यकर्मावसाने आचार्यनिनदं श्रुत्वा तच्छिष्याः यथाऽधीयंते तद्वदिति ९ अनुशुष्यतीः अनुशुष्यंत्यः अस्वतंत्रस्य इंद्रियपरतंत्रस्य स्वतंत्रस्य निरंकुशस्येति वा १०

हरिभिर्नीलैः शप्पैः बालतृणैः नीलपर्णा क्वचित् इन्द्रगोपैः कीटविशेषैर्लोहिता तत्रतत्र उच्छिलीन्ध्रैः छत्राकारैः कन्दैः रूतच्छाया नृणां राजश्रीः सेनासंपदिव ११ से ञाणीति तदाहि वृष्टेरविच्छेदे खलत्सत्त्वभयमप्युद्रुपोसुदददति विच्छेदेसुष्यतोऽनुतापश्चेति १२ अविभ्रत अबिभरु यथा हरिनिषेवयेति हरिसेवायामवृत्तादि सद्यएवसर्वेरुचिरंभवति यस्याः परमधर्मत्वात्सरमसुखत्वाच्च तद्वदिति १३ कामाक्त कामवासनायुक्तमिति श्वसनोर्मिसाम्य गुणैर्विषयैर्युज्यत इति सरित्संगति साम्यम् १४ अधोक्षज एवचेतो येषां ते १५ असंस्कृता अक्षुण्णा नाभ्यस्यमाना इत्यसंस्कृतसाम्यम् कालेनचाहता इतितृणाच्छादनसाम्यम् १६ यथाका मिन्य पुंश्चल्य १७ निर्गुणज्यारहितमपिगुणिनिगर्जितशाभ्वतिअभात् अशोभत गुणव्यतिकरात्मके व्यक्ते प्रपञ्चे अगुणवान् निर्गुण पुरुषो यथेति १८ स्वभासा

हरिताहरिभि शप्पैरिन्द्रगोपैश्चलोहिता उच्छिलीन्ध्रकृतच्छायानृणांश्रीरिवभूरभूत् ११ क्षेत्राणिसस्यसंपद्भिः कर्षकाणांमुदंददु धनिनामुपतापञ्चदैवाधीनमजानताम् १२ जलस्थलौकसः सर्वेनववारिनिषेवया अबिभ्रद्रुचिरंरूपंयथाहरिनिषेवया १३ सरिद्भिः संगतः सिन्धुश्चुक्षुभेश्वसनोर्मिमान् अपक्वयोगिनश्चित्तंकामाक्तंगुणयुग्यथा १४ गिरयोवर्षधाराभिर्हन्यमानानविव्यथुः अभि भूयमानाव्यसनैर्यथाऽधोक्षजचेतसः १५ मार्गाबभूवुः संदिग्धास्तृणैश्छन्नाह्यसंस्कृताः नाभ्यस्यमानाः श्रुतयोद्विजैःकालहताइव १६ लोकबन्धुषुमेघेषुविद्युतश्चलसौहृदाः स्थैर्यंनचक्रुःकामिन्यःपुरुषेषुगुणिष्विव १७ धनुर्वियतिमाहेन्द्रंनिर्गुणंचगुणिन्यभा त् व्यक्तेगुणव्यतिकरेऽगुणवान्पुरुषोयथा १८ नरराजोडुपश्छन्नःस्वज्योत्स्नाराजितैर्घनैः अहंमत्याभासितयास्वभासापुरुषो यथा १९ मेघागमोत्सवाहृष्टाःप्रत्यनन्दञ्छिखण्डिनः गृहेषुतप्तानिर्विण्णायथाऽच्युतजनागमे २० पीत्वाऽपःपादपाःपद्भिरासन्नानात्म मूर्तयः प्राक्क्षामास्तपसाश्रान्तायथाकामानुसेवया २१ सरःस्वशान्तरोधःसुन्यूषुरङ्गापिसारसाः गृहेष्वशान्तकृत्येषुग्राम्याइवदुराशयाः २२ जलौघैर्निरभिद्यन्तसेतवोवर्षतीश्वरे पाखण्डिनामसद्वादैर्वेदमार्गाःकलौयथा २३ व्यमुञ्चन्वायुभिर्नुन्नाभूतेभ्योऽथामृतंघनाः यथाऽऽशिषोविश्पतयःकालेकालेद्विजेरिताः २४ एवंवनंतद्वर्षिष्ठंपक्वखर्जूरजम्बुमत् गोगोपालैर्वृतोरन्तुंसबलःप्राविशद्धरिः २५ धे नवोमन्दगामिन्यऊधोभारेणभूयसा ययुर्भगवताहूताद्रुतंप्रीत्यास्नुतस्तनीः २६

भासितया अहंमत्येतिस्वचैतन्येनैवप्रकाशितेनाहंकारेणच्छ न्नोजीवोयथा यद्वा अहंविद्वान्दातावक्ताशूरइतिस्वपतीत्येवारोपितया इति १९ मेघागमेनोत्सवोयेषाम् अतोहृष्टाः २० नानात्ममूर्तयः अनेकरूपदेहाः २१ अशान्तानिपङ्ककण्टकादियुक्तानिरोधांसितटानियेषांतेष्वपिन्यूषुः नितरामवसन् सारसाः चक्रवाकाः अशान्तानिघोराणि अनुपरतानिवा कृत्यानियेषुतेष्वपिगृ हेषु २२ ईश्वरेइन्द्रे २३ नुन्नाः प्रेरिताः आशिषः कामान् विश्पतयोराजानः वणिजांपतयोवा द्विजेरिताः पुरोहितैरुक्ताः २४ प्रावृषिकृतांक्रीडांवर्णय ति एवमिति सप्तभिः वर्षिष्ठंसमृद्धम् २५ २६ ५ ५ ५ ५ ५

वनौकसः पुलिंदीः प्रमुदिताः भगवान् ददृशे तथा वनराजीः मधुच्युतः मधुस्रवाः ददृशे गिरेः सकाशाज्जलधाराश्च तासां नादान् आसन्ना निकटवर्तिनीर्गुहाश्च
यद्वा वनौकसः प्रमुदिता आसन् तथा वनराजीः वनराजयः वनपरंपराः मधुच्युत आसन् गिरेर्जलधारा आसन् तानेवंभूतान् आददृशे सर्वतो ददर्श तथा भगवा
न् धाराणां नादान् गुहाश्चेति २७ २८ २९ ३० ३१ शरदं वर्णयति एवं निवसतोरित्यष्टादशभिः विगतानि अभ्राणि यस्यां सा स्वच्छानि अंबूनि यस्यां सा अ
परुषः शांतोऽनिलो यस्यां सा च सा च ३२ नीरजानामुत्पत्तिर्यया तया शरदा कृत्वा नीरजानामुत्पत्त्या वा ३३ व्योम्नोऽब्दमिति व्योमादीनां चतुर्णां चतुरो मलान् शर
दहरत् आश्रमिणां चतुर्णां कृष्णे जाता भक्तिर्यथाऽशुभमसुखं हरति तथाहि ब्रह्मचारिणो गुर्वर्थोदकाहरणकष्टं यथा भक्तिर्हरति तथा पूर्णस्य तेनानुपयोगात्
गुरुभिरपि कृतार्थस्य तस्यानियोगात् एवं व्योम्नोऽब्दं शरज्जहार यथा च गृहिणोऽपत्यादिसांकर्यं भक्तिर्हरति विविक्तवासरुच्युत्पत्तेः तथाभूतानां शाबल्यं सा

वनौकसः प्रमुदिता वनराजीर्मधुच्युतः जलधारा गिरेर्नादानासन्ना ददृशे गुहाः २७ क्वचिद्वनस्पतिक्रोडे गुहायां चाभिवर्षति निर्वि
श्य भगवान्रेमे कंदमूलफलाशनः २८ दध्योदनं समानीतं शिलायां सलिलांतिके संभोजनीयैर्बुभुजे गोपैः संकर्षणान्वितः २९
शाद्वलोपरि संविश्य चर्वतो मीलितेक्षणान् तृप्तान्वृषान्वत्सतरान्गाश्च स्वोधोभरश्रमाः ३० प्रावृट्श्रियं च तां वीक्ष्य सर्वभूतमुदाव
हाम् भगवान्पूजयांचक्रे आत्मशक्त्युपबृंहिताम् ३१ एवं निवसतोस्तस्मिन्रामकेशवयोर्व्रजे शरत्समभवद्व्यभ्रा स्वच्छांब्वपरु
षानिला ३२ शरदा नीरजोत्पत्त्या नीराणि प्रकृतिं ययुः भ्रष्टानामिव चेतांसि पुनर्योगनिषेवया ३३ व्योम्नोऽब्दं भूतशाबल्यं भुवः पं
कमपां मलम् शरज्जहाराश्रमिणां कृष्णे भक्तिर्यथाऽशुभम् ३४ सर्वस्वं जलदा हित्वा विरेजुः शुभ्रवर्चसः यथा त्यक्तैषणाः शांता मु
नयो मुक्तकिल्बिषाः ३५ गिरयो मुमुचुस्तोयं क्वचिन्न मुमुचुः शिवम् यथा ज्ञानामृतं काले ज्ञानिनो ददते न वा ३६ नैवाविदन्क्षीयमा
णं जलं गाधजलेचराः यथाऽऽयुरन्वहं क्षय्यं नरा मूढाः कुटुंबिनः ३७ गाधवारिचरास्तापमविंदन्शरदर्कजम् यथा दरिद्रः कृपणः कुटुं
ब्यविजितेंद्रियः ३८ शनैः शनैर्जहुः पंकं स्थलान्यामं च वीरुधः यथाऽहंममतां धीराः शरीरादिष्वनात्मसु ३९ निश्चलांबुरभूत्तूष्णीं
समुद्रः शरदागमे आत्मन्युपरते सम्यङ्मुनिर्व्युपरतागमः ४० केदारेभ्यस्त्वपोऽगृह्णन्कर्षका दृढसेतुभिः यथा प्राणैः स्रवज्ज्ञानं
तन्निरोधेन योगिनः ४१

कथं शरत् वर्षासु वृष्टिभिया संकुलानि वसंति यथा च वनस्थस्य मलधारणक्लेशं भक्तिर्हरति एवं भुवः पंकं शरत् यथा च यतीनां का
मादिवासनामलं श्रीकृष्णभक्तिर्हरति एवमपां मलं शरदिति ३४ त्यक्तैषणाः त्यक्ताः सुतवित्तलोकैषणा यैस्ते ३५ गिरय इति अयं भावः न ह्युपाख्यायाः कर्मविद्याभिवज्ञा
निनो ज्ञानामृतं सर्वतो वितरंति अपि तु कृपया क्वचिदेव एवं गिरयः शिवं निर्मलं तोयं क्वचिन्मुमुचुः क्वचिन्न न पुनः प्रावृषीव सर्वत इति ३६ गाधे क्षुद्रे जले चरंतीति तथा ते मीनादयः
अविंदन् लेभिरे ३७ ३८ शनैः शनैरिति तत्र ममतामिव पंकमहंतामिव आमतामपक्वतां जहुरिति ३९ आत्मन्युपरते त्यक्तक्रियो मुनिरिव निश्चलांबुः स एव व्युपरतागमः
निवृत्तवेदघोष इव तूष्णीमभूदिति ४० केदारेभ्यो बद्धशालिक्षेत्रेभ्यो दृढैः सेतुभिरपो गृह्णन् ततः परं वृष्ट्यभावात् प्राणैरिंद्रियैस्तन्निरोधेन इंद्रियप्रत्याहारेण ४१

देहाभिमानजंबोधरव व्रजयोषितामुकुंदइवचेत्यर्थ ४२ शरदाविमलातारकायस्मिन्तत् शब्दब्रह्मणावेदस्यार्थान्पूर्वोत्तरमीमांसानिर्णीतान्दर्शयतीतितथ्यतद्द
त् ४३ ४४ समाअन्यूनाधिक शीतस्योष्णश्चयत नतुगोप्य कृष्णाप्नहृतचेतस्तेनतासांसतापोदु सहइति यद्वा नकारउपमार्थ तदाकृष्णाहृतचेतसइति चेतसा रु धा
माश्लिष्यय येत्यर्थ ४५ पुष्पिण्य गर्भिण्य अन्वीयमाना स्ववृषैः स्वपतिभिरनिच्छन्त्योऽपिबलादनुगम्यमाना ईश्वराराधनार्था क्रिया बलात्फलैरनुगम्यमाना
समस्तभोगगर्भापयेति ४६ कुमुत्कुमुदकुक्षितस्मृत यस्येति दस्युसाम्यम् ४७ आग्रयणैर्नवान्नप्राशनार्थै वैदिकैर्यागैरिन्द्रियैरिन्द्रियार्थैर्लौकिकैश्चमहोत्सव
कलाभ्यांरामकृष्णाभ्यांदर्शनादिमहोत्सवाभ्याम् ४८ वणिजोयतयोनृपा स्नातकाश्चवर्षादृपाभ्यावर्षरुद्धा सन्तोनिर्गम्यार्थान्वाणिज्यस्वाच्छंद्यदिग्विजयादि
धारान्प्रपेदिरे प्रापयत यथामनयोगादिसिद्धा आयुषारुद्धा कालेआगतेस्वपिंडान्योगादिप्राप्यान्देवादिदेहानिति ४९ इतिदशमेटीकायांविंशतितमोऽ

शरदर्कांशुजांस्तापान्भूतानामुडुपोऽहरत् देहाभिमानजंबोधोमुकुंदोव्रजयोषिताम् ४२ खमशोभतनिर्मेघंशरद्विमलतारकम् सत्त्व
युक्तयथाचित्तशब्दब्रह्मार्थदर्शनम् ४३ अखंडमंडलोव्योम्निरराजोडुगणैः शशी यथायदुपति कृष्णोवृष्णिचक्रावृतोभुवि ४४ आ
श्लिष्यसमशीतोष्णंप्रसूनवनमारुतम् जनास्तापंजहुर्गोप्योनकृष्णहृतचेतसः ४५ गावोमृगाः खगानार्यः पुष्पिण्यः शरदाऽभवन् अ
न्वीयमानाः स्ववृषैः फलैरीशक्रियाइव ४६ उदहृष्यन्वारिजानिसूर्योत्थानेकुमुद्विना राज्ञातुनिर्भयालोकायथादस्यून्विनानृप ४७ पु
रग्रामेष्वाग्रयणैरिन्द्रियैश्चमहोत्सवैः बभौभूः पक्वसस्याढ्याकलाभ्यांनितरांहरेः ४८ वणिङ्मुनिनृपस्नातानिर्गम्यार्थान्प्रपेदिरे वर्षरु
द्धायथासिद्धाः स्वपिंडान्कालआगते ४९ इतिश्रीभाग॰महा॰दश॰शरद्वर्णननामविंशतितमोऽध्याय २० श्रीशुकउवाच
इत्थंशरत्स्वच्छजलंपद्माकरसुगंधिना न्यविशद्वायुनावातंसगोगोपालकोऽच्युतः १ कुसुमितवनराजिशुष्मिभृंगद्विजकुलघुष्ट
सरःसरिन्महीध्रम् मधुपतिरवगाह्यचारयन्गाः सहपशुपालबलश्चुकूजवेणुम् २ तद्व्रजस्त्रियआश्रुत्यवेणुगीतंस्मरोदयम् काश्चि
त्परोक्षंकृष्णस्यस्वसखीभ्योऽन्ववर्णयन् ३ तद्वर्णयितुमारब्धाः स्मरंत्यः कृष्णचेष्टितम् नाशकन्स्मरवेगेनविक्षिप्तमनसोनृप ४
बर्हापीडंनटवरवपुः कर्णयोः कर्णिकारंबिभ्रद्वासः कनककपिशंवैजयंतींचमालाम् रंध्रान्वेणोरधरसुधयापूरयन्गोपवृंदैर्वृंदारण्यंस्व
पदरमणंप्राविशद्गीतकीर्तिः ५ ध्याय २० एवंविशेषशरद्रम्यवृंदावनगतेहरौ तद्वेणुस्वनमाकर्ण्यगोपीभिर्गीतमीर्यते १ इत्थमेवभूतवनम् तदेवाह शरदा
स्वच्छानिजलानियस्मिन्तत् वायुनावातमनुगतव्याप्तमित्यर्थ १ ततश्चकुसुमितवनराजिषुशुष्मिणोमत्ता भृंगाद्विजा खगाश्चतेषांकुलानितैर्घुष्टा सरांसिस
रित महीध्राश्चयस्मिन् तद्वनंकृष्णोऽवगाह्यप्रविश्यवेणुमवादयत् २ तत्कृष्णवेणुगीतम् स्मरस्योदयोयस्मात् तदाश्रुत्यश्रुत्वापरोक्षंयथाभवतितथा ३ व्रजेस्थित
त्वादिविक्षिप्तमनसः व्याकुलचित्ता ४ यादृशंकृष्णस्मरणंतासांमनस्युत्पन्नंजातंतदाह बर्हापीडमिति नटवत्वरंवपुर्बिभ्रत् वृंदावनंप्राविशत्कथंभूतवनं स्वपदैरंकितैः रमणर
तिजनकंगोपवृंदैः गीतकीर्तिः तथाबर्हमयमापीडंशिरोभूषणंबिभ्रत् बर्हमापीडोयस्मिन्निति वपुषोविशेषणंवावेणुवादनसुखेसते रंध्रान्वेणोरिति अतोनूनमधरसुधैवपू
र्णाद्वेणोरुच्छलतीगीतवत्प्रसर्पितुमर्हतीतिभाव ५ ७५ २

तदातस्मिन्नेवक्षणेतत्प्रीतयेउडुराजश्चंद्रउदगात् उदितः किंकुर्वन् दीर्घकालेनदर्शनंयस्यसः प्रियः स्वप्रियायाः मुखमरुणेनकुंकुमेनयथाविलिंपतितथाप्रा च्याः ककुभोदिशः मुखंशंतमैः सुखतमैःकरैरश्मिभिः अरुणेनउदयरागेणविलिंपन्नरुणीकुर्वन्नित्यर्थः सप्रसिद्धः उडुराजः चर्षणीनांजनानांशुचः तापग्लानीः मृजन् अपनयन् २ कुमुत्कुमुदंविकसनीयंविद्यतेयस्यतंकुमुद्वंतंनखंडमंडलंयस्यतंरमायाआननस्यआभाइवआभायस्यतम् नवकुंकुममिवअरुणमेवंविधंचंद्रं दृष्ट्वा तथाचवनंतस्यकोमलैःगोभिःरंजितंदृष्ट्वाकलंमधुरंजगौ अगायत् कथंवामदृशांवामाः मनोहराः दृशोयासांतासांमनोहरंयथा ३ असापत्यार्थमन्योन्यमलक्षितः नज्ञापितः उद्यमोयाभिस्ताः सकांतोयत्रतत्रगीतध्वनिमार्गेणजग्मुः जवेनवेगेनलोलानिचंचलानिकुंडलानियासांताः ४ श्रीकृष्णसूचकशब्द श्रवणेनतत्प्रवणचित्तानांतत्क्षणमेवत्रैवर्गिककर्मनिवृत्तिंद्योतयंत्यइवान्हिवासिप्रूकर्मविहाययपुः तदाह दुहंत्यइति पयःस्थालीस्थंचुल्ल्यामाधिश्रित्येतत्क्वाथ गप्रतीक्षमाणाःकाश्चिद्ययुः संयावंगोधूमकणान्नंपक्वमनुद्वास्यअनुत्तार्य ५ ६ अन्याः प्रमृजंत्यः अंगोद्वर्तनादिकुर्वंत्यःकाश्चकाश्चित्कृष्णातुच्छ्यर्थकर्मेत

तदोडुराजःककुभःकरैर्मुखंप्राच्याविलिंपन्नरुणेनशंतमैः सचर्षणीनामुदगाच्छुचोमृजन्प्रियःप्रियायाइवदीर्घदर्शनः २ दृष्ट्वाकुमुद्वंतमखंडमंडलंरमाननाभंनवकुंकुमारुणम् वनंचतत्कोमलगोभिरंजितंजगौकलंवामदृशांमनोहरम् ३ निशम्यगीतंतदनंगवर्द्धनंव्रजस्त्रियःकृष्णगृहीतमानसाः आजग्मुरन्योऽन्यमलक्षितोद्यमाःसयत्रकांतोजवलोलकुंडलाः ४ दुहंत्योऽभिययुःकाश्चिद्दोहंहित्वासमुत्सुकाः पयोऽधिश्रित्यसंयावमनुद्वास्यापराययुः ५ परिवेषयंत्यस्तद्धित्वापाययंत्यःशिशून्पयः शुश्रूषंत्यःपतीन्काश्चिदश्नंत्योऽपास्यभोजनम् ६ लिंपंत्यःप्रमृजंत्योऽन्याअंजंत्यःकाश्चलोचने व्यत्यस्तवस्त्राभरणाःकाश्चित्कृष्णांतिकंययुः ७ तावार्यमाणाःपतिभिःपितृभिर्भ्रातृबंधुभिः गोविंदापहृतात्मानोनन्यवर्त्तंतमोहिताः ८ अंतर्गृहगताःकाश्चिद्गोप्योऽलब्धविनिर्गमाः कृष्णंतद्भावनायुक्तादध्युर्मीलितलोचनाः ९ दुःसहप्रेष्ठविरहतीव्रतापधुताशुभाः ध्यानप्राप्ताच्युताश्लेषनिर्वृत्याक्षीणमंगलाः १० तमेवपरमात्मानंजारबुद्ध्याऽपिसंगताः जहुर्गुणमयंदेहंसद्यःप्रक्षीणबंधनाः ११

दासक्तमनसामन्यथाकृतमपिफलसेवे तिद्योतयन्नाह व्यत्यस्तेति स्थानतःस्वरूपतश्चोर्ध्वाधोधारणेनविपर्ययंप्राप्तानिवस्त्राभरणानियासांताः ७ नचकृष्णाकृष्टमनसांविघ्नाः प्रभवंतीत्याह ता वार्यमाणाइति ८ नलब्धोनिर्गमोयाभिस्ताः प्रागपितद्भावनायुक्ताः तदानितरांदध्युरित्यर्थः ९ किंच तदानीमेवतंपरमात्मानंकृष्णंध्यानतः प्राप्ताः सत्यः गुणमयंदेहंजहुरित्याहश्लोकद्वयेन दुःसहेति ननु कथंजहुःपरमात्मेतिज्ञानाभावादित्याशंक्याह जारबुद्ध्याऽपीति नहिवस्तुशक्तिःबुद्धिमपेक्षते अन्यथाम त्वाऽपिपीतामृतवदितिभावः ननुतदपिप्रारब्धकर्मबंधनेसतिकथंजहुस्तत्राह सद्यः प्रक्षीणबंधनाइति ननु कथंभोगमंतरेणप्रारब्धंकर्मक्षीणंभोगेनैवसद्यःक्षीण मित्याह दुःसहेति दुःसहोयः प्रेष्ठविरहस्तेनतीव्रतापस्तेनधुतानिगतानिअशुभानियासांतदप्राप्तिपरमदुःखभोगेनपापंक्षीणमित्यर्थःतथाध्यानेनप्राप्तोऽच्युतस्याश्लेषेणयानिर्वृतिःपरमसुखभोगःतयाक्षीणंमंगलंपुण्यबंधनंयासांताः अतोध्यानेनपरमात्मप्राप्तेस्तत्कालसुखदुःखाभ्यांनिःशेषकर्मक्षयात्गुणमयंदे हंजहुरिति १० ११

ननुतथापतिश्चादीनांवस्तुतोब्रह्मत्वेऽपिनतद्भजनान्मोक्ष तथाबुद्ध्यभावात् एवंकृष्णोऽपिब्रह्मस्वरूपभावेनतत्सङ्गति कथंमोक्षहेतुरितिशङ्कते कृष्णंविदुरि
ति परंकेवलंकान्तंकमनीयंविदु नब्रह्म १२ परिहरति उक्तमिति अयंभाव आवेशमात्रंब्रह्मत्वंकृष्णस्यतुहृषीकेशत्वादनावृतमतोनतद्बुद्ध्यपेक्षेति १२
ननुदेहोरूपमनावृतं स्यादतआह नृणामिति गुणात्मन गुणनियन्तु भगवतएवरूपाभिव्यक्ति अतोनदेहिसादृश्यमत्रवस्तुयुज्यतइतिभावः १४ अतोयथाक
थंचित्तदासक्तिर्मुक्तिकारणमित्याह काममिति ऐक्यंसंबंधंसौहृदंभक्तिम् १५ नचभगवतोऽयमतिभारइत्याह नचैवमिति यत श्रीकृष्णादेतत्स्थावरादिकमपिवि
मुच्यते १६ प्रस्तुतमाह तादृष्ट्वेति वाच पेशैर्विलासैः १७ ससंभ्रममागताविलोक्यससंभ्रममिवाह व्रजस्येति १८ उज्ज्वलामदहसितमालक्ष्याह रजन्येषेति १९

राजोवाच कृष्णंविदु परंकान्तंनतुब्रह्मतयामुने गुणप्रवाहोपरमस्तासांगुणधियांकथम् १२ श्रीशुकउवाच उक्तं
पुरस्तादेतत्तेचैद्य सिद्धिंयथागत द्विषन्नपिहृषीकेशंकिमुताधोक्षजप्रियाः १३ नृणांनिःश्रेयसार्थायव्यक्तिर्भगवतोनृप अ
व्ययस्याप्रमेयस्यनिर्गुणस्यगुणात्मन १४ कामंक्रोधंभयंस्नेहमैक्यंसौहृदमेवच नित्यंहरौविदधतोयान्तितन्मयतांहिते १५ न
चैवंविस्मय कार्योभवताभगवत्यजे योगेश्वरेश्वरेकृष्णेयतएतद्विमुच्यते १६ तादृष्ट्वाऽन्तिकमायाताभगवान्व्रजयोषित अवद
द्वदतांश्रेष्ठोवाच पेशैर्विमोहयन् १७ श्रीभगवानुवाच स्वागतंवोमहाभागा प्रियंकिंकरवाणिव व्रजस्यानामयं
कच्चिद्ब्रूतागमनकारणम् १८ रजन्येषाघोररूपाघोरसत्त्वनिषेविता प्रतियातव्रजंनेहस्थेयंस्त्रीभि सुमध्यमा १९ मातर पित
र पुत्रा भ्रातर पतयश्चव विचिन्वन्तिह्यपश्यन्तोमाकृढ्वंबन्धुसाध्वसम् २० दृष्टंवनंकुसुमितंराकेशकररञ्जितम् यमुनाऽनि
ललीलैजत्तरुपल्लवशोभितम् २१ तद्यातमाचिरंगोष्ठंशुश्रूषध्वंपतीन्सती क्रन्दन्तिवत्साबालाश्चतान्पाययतदुह्यत २२ अथ
वामदभिस्नेहाद्भवत्योयन्त्रिताशया आगताह्युपपन्नंव प्रीयन्तेमयिजन्तव २३ भर्त्तु शुश्रूषणंस्त्रीणांपरोधर्मोह्यमायया त
द्बन्धूनांचकल्याण्य प्रजानांचानुपोषणम् २४ दु शीलोदुर्भगोवृद्धोजडोरोग्यधनोऽपिवा पति स्त्रीभिर्नहातव्योलोकेप्सुभिर
पातकी २५ अस्वर्ग्यमयशस्यंचफल्गुकृच्छ्रंभयावहम् जुगुप्सितंचसर्वत्रऔपपत्यंकुलस्त्रिया २६ श्रवणाद्दर्शनाद्ध्यानान्मयि
भावोऽनुकीर्त्तनात् नतथासन्निकर्षेणप्रतियाततततोगृहान् २७ श्रीशुकउवाच इतिविप्रियमाकर्ण्यगोप्योगोविन्दभाषि
तम् विषण्णाभग्नसङ्कल्पाश्चिन्तामापुर्दुरत्ययाम् २८

किंच मातरइति विचिन्वन्ति मृगयन्ते बन्धूनांसाध्वसंमाकृढ्वं माकुरुतेत्यर्थः २० ईषत्प्रणय
कोपेनान्यतोविलोकयन्तीर्मत्वाह दृष्टमिति राकेशस्यपूर्णचन्द्रस्यकरैरञ्जितम् यमुनास्पर्शिनोऽनिलस्यलीलामन्दगतिस्तयाएजन्त कम्पमानास्तरूणांपल्ल
वास्तै शोभितम् २१ सती हे सत्य २२ सरभसोत्थितदृष्टीर्मत्वाह अथवेति यन्त्रिताशया वशीकृतचित्ता उपपन्नंयुक्तम् प्रीयन्ते प्रीताभवन्ति २३ दृष्टा
दृष्टभयप्रदर्शनेननिवर्त्तयति भर्त्तुरित्यादिश्लोकत्रयेण २४ २५ फल्गुतुच्छंकृच्छ्रं दु खसंपादकम् औपपत्यंजारसौख्यम् २६ किंच श्रवणादिति २७ २८

चिंतां प्राप्तानां स्थितिमाह कृत्वेति शुचः शोकादुद्भवेन श्वसनेन शुष्यंतो बिंबफलसदृशा अधरा येषु मुखेषु तानि अव अवांचि कृत्वा तथा अंगुष्ठेन महीं लिखंत्यः त
था गृहीतकज्जलैरश्रुभिः कुचकुंकुमानि क्षालयंत्यः तूष्णीं स्थिताः यतः उरुर्दुःखभरो भारो यासां ताः २९ किंच प्रेष्ठमिति किंचित्संरंभेण कोपावेशेन गद्गदा
गिरो यासां ताः अब्रुवतस्म संरंभे कारणं प्रेष्ठमित्यादि प्रियेतरमिव प्रतिभाषमाणं प्रत्याचक्षाणम् ३० नृशंसं क्रूरम् दुरवग्रह हे स्वच्छंद तव पादमूलं भक्ताः से
वितवृत्तीः अस्मान्भजस्व मा त्यजेति ३१ अपिच यदुक्तं यत्पत्यपत्येत्यादि त्वया धर्मविदेति सोपहासमेवमेतदुपदेशानां पदे विषये त्वय्येवास्तु उपदेशपदत्वे हे
तुः ईश इति विधिद्विधावाक्येन सर्वोपदेशानामीशपरत्वावगमादिति भावः ईशत्वे हेतुः आत्मा किल भवानिति भोग्यस्य हि सर्वस्य भोक्ता आत्मैवेश इति अ
तः प्रेष्ठो बंधुश्च भवानेवेति सर्वबंधुशुश्रूषणं त्वय्येवास्त्वित्यर्थः अथवा धर्मोपदेशानां पदे स्थाने धर्मोपदेष्टरि त्वयि सति अस्मासु च धर्मं जिज्ञासमानासु सती

कृत्वा मुखान्यव शुचः श्वसनेन शुष्यद्बिंबाधराणि चरणेन भुवं लिखंत्यः अस्रैरुपात्तमषिभिः कुचकुंकुमानि तस्थुर्मृजंत्य उरुदुः
खभराः स्म तूष्णीम् २९ प्रेष्ठं प्रियेतरमिव प्रतिभाषमाणं कृष्णं तदर्थविनिवर्तितसर्वकामाः नेत्रे विमृज्य रुदितोपहते स्म किंचित्सं
रंभगद्गदगिरोऽब्रुवतानुरक्ताः ३० गोप्य ऊचुः मैवं विभोऽर्हति भवान्गदितुं नृशंसं संत्यज्य सर्वविषयांस्तव पादमूलम्
भक्ता भजस्व दुरवग्रह मा त्यजास्मान्देवो यथादिपुरुषो भजते मुमुक्षून् ३१ यत्पत्यपत्यसुहृदामनुवृत्तिरंग स्त्रीणां स्वधर्म इति धर्म
विदा त्वयोक्तम् अस्त्वेवमेतदुपदेशपदे त्वयीशे प्रेष्ठो भवांस्तनुभृतां किल बंधुरात्मा ३२ कुर्वंति हि त्वयि रतिं कुशलाः स्व आत्मन्नित्य
प्रिये पतिसुतादिभिरार्तिदैः किम् तन्नः प्रसीद परमेश्वर मा स्म छिंद्या आशां भृतां त्वयि चिरादरविंदनेत्र ३३ चित्तं सुखेन भवताऽ
पहृतं गृहेषु यन्निर्विशत्युत करावपि गृह्यकृत्ये पादौ पदं न चलतस्तव पादमूलाद्यामः कथं व्रजमथो करवाम किं वा ३४ सिंचांग नस्त्व
दधरामृतपूरकेण हासावलोककलगीतजहृच्छयाग्निम् नो चेद्वयं विरहजाग्न्युपयुक्तदेहा ध्यानेन याम पदयोः पदवीं स
खे ते ३५ पु त्वया धर्मविदा यदुक्तमेवमेतदस्तु न तु त्वं धर्मोपदेष्टा किंतु भवानात्मेति अथवा यदुक्तमेतदुपदेशपदे तज्ज्ञोऽचरेषु रुषे अस्तु
नाम त्वयि तु ईशे स्वामिनि एवं का क्षतिर्नैवमित्यर्थः यस्तनुभृतां त्वमात्मा फलरूप इति यद्वा यदुक्तं पत्यादिशुश्रूषणं धर्म इति एवमेतत्त्वय्येवास्तु कुतः
उपदेशपदे शुश्रूषणीयत्वेनोपदिश्यमानानां पत्यादीनां पदे अधिष्ठाने कुतः ईशे न हीश्वरमधिष्ठानं विना कोऽपि पतिपुत्रादिर्नामेति अन्यत्समानमलंग
ति विस्तरेण ३२ एतत्सदाचारेण द्रढयंत्यः प्रार्थयंते कुर्वंतीति शास्त्रनिपुणाः तथा च शास्त्रम् किं प्रजया करिष्यामो येषां नोऽयमात्मा लोक इत्यादि ३३ किंच प्र
ति यातेति यदुक्तं तदशक्यं त्वयैव चित्तादीनामपहृतत्वादित्याहुः चित्तमिति यदस्माकं चित्तमेतावंतं कालं सुखेन गृहेषु निर्विशति तत्त्वयाऽपहृतं करावपि यौ गृह्य
कृत्ये निर्विशतस्तावपि सुखान्निवर्तयाइतिवा ३४ अतः अंग हे कृष्ण नः अस्माकं तवाधरामृतपूरकेण तवैव हाससहितेनावलोकेन कलगीतेन च जातो यो हृच्छया
ग्निः कामाग्निस्तं सिंच नो चेद्वयं भावदेको ऽग्निस्त्वद्विरहाज्जनिष्यते यो ऽग्निस्तेन च उपयुक्तदेहाः दग्धशरीराः योगिन इव ते पदवीमंति कध्यानेन याम प्राप्नुयाम
३५

ननुसपतिनेपोपगच्छनतएवाग्निधिन्वेयुरितिचेत्तत्राहु यहीति रमायालक्ष्म्या दत्तक्षणदत्तोत्सवदत्तावसरधातदपिक्वचिदेव नसर्वदा अरण्यजना भिया
यस्यतस्यतवअरण्यजनप्रियत्वादरण्येक्वचित् यर्हि अस्मासु स्पृष्टवत्सोवयतन्नत्वया ऽभिरमिताआनंदिता सत्य तदारभ्यान्यसमक्षस्थातुमपिनपारया
मः तुच्छास्तेनरोनतदृश्यं ३६ तत्प्रसादसौभाग्यत्वात्तिनिनमित्याह श्रीरिति यत्पादाब्जअसापत्न्यस्थानलब्ध्वा ऽपितुलस्यासपत्न्यासहतवपदाब्जरज का
मयतेस्म भृत्यैः सर्वैर्जुष्टमितिसौभाग्यातिरेकोक्तिः यस्या स्ववीक्षणकृते श्रीरामानविलोकयत्वित्येतदर्थमन्येपाब्रह्मादीनातपोभिः प्रयास सातद्रज
तदद्वयमधिप्रपन्नाइति ३७ हेवृजिनार्दन दुःखहृत, त्वदुपासनेत्वद्भजनएवआशायासातावयंवसतीर्गृहानविसृज्यहित्वायोगिनइवप्राप्ता तवसुन्दरस्मित
विलसितनिरीक्षणेनय तीव्र कामः तेनतप्तचित्तानां हेपुरुषरत्नदास्यदेहि ३८ ननुगृहस्वाम्यंविहायदास्यंकिमितिप्रार्थ्यतेअतआहु वीक्ष्येति अल

यर्त्यम्बुजाक्षतवपादतलंरमायादत्तक्षणंक्वचिदरण्यजनप्रियस्य अस्प्राक्ष्मतत्प्रभृतिनान्यसमक्षमगस्थातुंत्वयाऽभिरमिता
स्मतपारयाम ३६ श्रीर्यत्पदाम्बुजरजश्चकमेतुलस्यालब्ध्वाऽपिवक्षसिपदंकिलभृत्यजुष्टम् यस्याः स्ववीक्षणकृतेऽन्यसुरप्रयास
स्तद्वद्वयंचतवपादरजःप्रपन्नाः ३७ तन्नःप्रसीदवृजिनार्दनतेऽघ्रिमूलंप्राप्ताविसृज्यवसतीस्त्वदुपासनाशाः त्वत्सुन्दरस्मित
निरीक्षणतीव्रकामतप्तात्मनांपुरुषभूषणदेहिदास्यम् ३८ वीक्ष्यालकावृतमुखंतवकुण्डलश्रीगण्डस्थलाधरसुधंहसितावलो
कम् दत्ताभयंचभुजदण्डयुगंविलोक्यवक्षःश्रियैकरमणंचभवामदास्यः ३९ कास्त्र्यङ्गतेकलपदायतवेणुगीतसम्मोहितार्यच
रितान्नचलेत्त्रिलोक्याम् त्रैलोक्यसौभगमिदंचनिरीक्ष्यरूपंयद्गोद्विजद्रुममृगाः पुलकान्यबिभ्रन् ४० व्यक्तंभवान्व्रज
भयार्तिहरोऽभिजातोदेवोयथाऽऽदिपुरुषःसुरलोकगोप्ता तन्नोनिधेहिकरपङ्कजमार्तबन्धोतप्तस्तनेषुचशिरःसुचकिंकरीणाम्
४१ श्रीशुकउवाच इतिविक्लवितंतासांश्रुत्वायोगेश्वरेश्वरः प्रहस्यसदयंगोपीरात्मारामोप्यरीरमत् ४२ ताभिःस
मेताभिरुदारचेष्टितःप्रियेक्षणोत्फुल्लमुखीभिरच्युतः उदारहासद्विजकुन्ददीधितिर्व्यरोचतैणाङ्कइवोडुभिर्वृतः ४३ उपगीयमान
उद्गायन्वनिताशतयूथपः मालांबिभ्रद्वैजयन्तींव्यचरन्मण्डयन्वनम् ४४

कावृतमुखमलकैरावृतमुखं तथाकुण्डलयो श्रीर्यस्तोत्तगण्डस्थ
लेयस्मिन् अधरेसुधायस्मिन्तच्चतच्चहसितावलोकंदत्ताभयभुजदण्डयुग्मंवक्षःश्चश्रियाएकमेवरमणरतिजनकंवीक्ष्यदास्यएवभवामेति ३९ ननुजुगुप्सि
तमौपपत्यमित्युक्तत्राह कास्त्रीति अगहेकृष्ण कलानिपदानियस्मिन्तत् आयतदीर्घमूर्च्छितस्वरालापभेदस्तत्पाठांतरेकलपदामृतमयवेणुगीततेनसमा
हिताकावार्य्याआर्यचरितान्निजधर्मान्नचलेत् यन्मोहितापुरुषाअपिचलिता किंच त्रैलोक्यसौभगमिति यत्यत अबिभ्रन् अबिभरुः त्वद्घोतकशब्द
श्रवणमात्रेणापितावन्निजधर्मत्यागोयुक्तः किंपुनस्त्वदनुभवेनेतिभावः ४० व्यक्तंनिश्चितम् ४१ विक्लवितंपारवश्यप्रलपितम् गोपीररीरमत् रमयामास
४२ प्रियस्येक्षणेनउत्फुल्लानिमुखानियासांताभिः उदारहासस्यद्विजाश्चतेषुकुन्दकुसुमवत्दीधितिर्यस्यसः एणाङ्कश्चन्द्र ४३ ४४ ६९ ६९

४५ बाहुप्रसारश्चपरिरंभश्चकरादीनामालभनंस्पर्शश्चनर्मपरिहासश्चनखाग्रपातश्चतैः क्ष्वेल्याक्रीडया अवलोकैश्चहसितैश्चकामंतासांउद्दीपयन् ताः रमयामास ४६ महात्मनोविमुक्तचित्तात् ४७ तत्सौभगमदंस्वाधीनताम् मानंगर्वम् केशवः कश्चईशश्चतौवशयतइतितथासः अंतर्धानंगतः ४८ इतिदशमेटीकायामेकोनत्रिंशोऽध्यायः २९ त्रिंशेविरहसंतप्तगोपीभिः कृष्णमार्गणम् उन्मत्तवन्नियतंभ्रमंतीभिर्वनेवने १ अचक्षाणाः अपश्यंत्यः १ गत्याचअनुरागस्मिताभ्यांविभ्रमेक्षितानिसविलासनिरीक्षणानितैश्चमनोरमाआलापाश्चविहाराः क्रीडाश्चविभ्रमाअन्येचविलासास्तैरमापतेर्गत्यादिभिरेतैराक्षिप्तानि आकृष्टानिचित्तानियासां अतस्तस्मिन्नेवआत्माययासांताः तस्यविविधाश्चेष्टाजगृहुः तदनुकरणेनाक्रीडन् २ अपिच गतिस्मितेति प्रियस्यगत्यादिषु

नद्याः पुलिनमाविश्यगोपीभिर्हिमवालुकम् रेमेतत्तरलानंदकुमुदामोदवायुना ४५ बाहुप्रसारपरिरंभकरालकोरुनीवीस्तनालभननर्मनखाग्रपातैः क्ष्वेल्याऽवलोकहसितैर्व्रजसुंदरीणामुत्तंभयन्रतिपतिंरमयांचकार ४६ एवंभगवतः कृष्णाल्लब्धमानामहात्मनः आत्मानंमेनिरेस्त्रीणांमानिन्योऽभ्यधिकंभुवि ४७ तासांतत्सौभगमदंवीक्ष्यमानंचकेशवः प्रशमायप्रसादायतत्रैवांतरधीयत ४८ इतिश्रीभाग० महा० दश० भगवतोबालचरित्रवर्णनंनामैकोनत्रिंशोऽध्यायः २९ श्रीशुकउवाच अंतर्हितेभगवति सहसैवव्रजांगनाः अतप्यंस्तमचक्षाणाः करिण्यइवयूथपम् १ गत्यानुरागस्मितविभ्रमेक्षितैर्मनोरमालापविहारविभ्रमैः आक्षिप्तचित्ताः प्रमदारमापतेस्तास्ताविचेष्टाजगृहुस्तदात्मिकाः २ गतिस्मितप्रेक्षणभाषणादिषुप्रियाः प्रियस्यप्रतिरूढमूर्त्तयः असावहंत्वित्यबलास्तदात्मिकान्यवेदिषुः कृष्णविहारविभ्रमाः ३ गायंत्यउच्चैरमुमेवसंहताविचिक्युरुन्मत्तकवद्वनाद्वनम् पप्रच्छुराकाशवदंतरंबहिर्भूतेषुसंतंपुरुषंवनस्पतीन् ४ दृष्टोवः कच्चिदश्वत्थप्लक्षन्यग्रोधनोमनः नंदसूनुर्गतोहृत्वाप्रेमहासावलोकनैः ५ कच्चित्कुरबकाशोकनागपुन्नागचंपकाः रामानुजोमानिनीनामितोदर्पहरस्मितः ६ कच्चित्तुलसिकल्याणिगोविंदचरणप्रिये सहत्वाऽलिकुलैर्बिभ्रद्दृष्टस्तेऽतिप्रियोऽच्युतः ७ मालत्यदर्शिवः कच्चिन्मल्लिकेजातियूथिके प्रीतिंवोजनयन्यातः करस्पर्शेनमाधवः ८

प्रतिरूढा आविष्टामूर्त्तयोयासांताः अतः कृष्णविहारविभ्रमाः कृष्णस्येवविहारविभ्रमाः क्रीडाविलासायासांताः अहमेवकृष्णइतिपरस्परंनिवेदितवंत्यः ३ किंच गायंत्यइतिवनाद्वनांतरंगच्छंत्योविचिक्युरमृगयन् उन्मत्ततुल्यत्वमाह वनस्पतीन्पप्रच्छुः भूतेषु अंतरंमध्ये संतंपुरुषंबहिश्चसंतमिति ४ तत्प्रपंचयतिनवभिः तत्रमहत्त्वादेतेपश्येयुरित्याशयाऽश्वत्थादीन्पृच्छंति दृष्टइति प्रेमहासविलसितैरवलोकनैरस्माकंमनोहृत्वा चोरइवगतोवोयुष्माभिः किंदृष्टइति ५ महांतः स्वपुष्पैः बहूपकारिणश्चेतिकुरुबकादीन्पृच्छंति कच्चिदिति हेकुरुबकादयः दर्पहरंस्मितंयस्यसः इतोगतः कच्चिदिति ६ अलिकुलैःसह गत्वांबिभ्रत् तवातिप्रियस्त्वयाकिंदृष्टइति ७ गुणातिरेकेऽपिनम्रत्वादिमाः पश्येयुरितिपृच्छंति मालतीति मल्लिकेजातियूथिके वः युष्माभिः किं अदर्शि दृष्टः करस्पर्शेनवः प्रीतिंजनयन् किंयातइति अत्रमालतीजात्योरर्थांतरविशेषोद्रष्टव्यः ८ ६९ ६९ ६९ ६९

फलादिभिः सर्वप्राणिनां सन्तर्पका एतपस्य पुरीतिपृच्छति चूतेति चूताम्रयोरवान्तरजातिभेदः कदम्बनीपयोश्च हे चूतादयः येऽन्येऽपरार्थभवकाः परार्थमेव
भवो जन्म येषां ते यमुनोपकूला तस्याः कूलसमीपे वर्तमानाः तीर्थवासिन इत्यर्थः ते भवन्त रहितात्मनां शून्यचेतसां कृष्णापदवीं कृष्णस्य मार्गं शंसन्तु कथयन्तु
९ हे क्षिति क्षिते त्वया किं तपः कृतम् यात्केशवाङ्घ्रिस्पर्शोत्सवा केशवाङ्घ्रिस्पर्शेन उत्सवो यस्याः साकुत अगरुहैरुत्पुलकितारोमाञ्चिता विभासि शोभसे त
स्य विशेषं पृच्छति अपि किमयमुत्सव अङ्घ्रिसम्भव अधुनातनकेशवाङ्घ्रिस्पर्शसम्भूतः यद्वा नैतावत् किन्तु उरुक्रमविक्रमात्पूर्वमेव त्रिविक्रमस्य पदा सर्वाक्रमणात्
अहो अथवा नैतावदेव अपि तु ततोऽपि पूर्वं वराहस्य वपुषः परिरम्भणेनेति अतस्त्वमानून दृष्टवती दर्शयेति १० हरिण्या दृष्टिभक्त्या सुत्याकृष्णदर्शनसम्भाव्याहु
अपीति हे सखि एणपत्नि अपि किमुपगतः समीपे गतः गात्रैः सुन्दरैः सुखयन् आह्लादिभिः प्रियया सहेति यदुक्तं तत् द्योतकः कान्ताया अङ्गसङ्गकुचकुङ्कुमेन रञ्जिता

चूतप्रियालपनसासनकोविदारजम्ब्वर्कबिल्वबकुलाम्रकदम्बनीपाः येऽन्ये परार्थभवका यमुनोपकूलाः शंसन्तु कृष्णपदवीं रहितात्म
नां नः ९ किं ते कृतं क्षिति तपो बत केशवाङ्घ्रिस्पर्शोत्सवोत्पुलकिताङ्गरुहैर्विभासि अप्यङ्घ्रिसम्भव उरुक्रमविक्रमाद्वा आहो वरा
हवपुषः परिरम्भणेन १० अप्येणपत्न्युपगतः प्रिययेह गात्रैस्तन्वन् दृशां सखि सुनिर्वृतिमच्युतो वः कान्ताङ्गसङ्गकुचकुङ्कुमरञ्जि
ताया कुन्दस्रजः कुलपतेरिह वाति गन्धः ११ बाहुं प्रियांस उपधाय गृहीतपद्मो रामानुजस्तुलसिकालिकुलैर्मदान्धैः अन्वीयमान
इह वस्तरवः प्रणामं किं वाभिनन्दति चरन् प्रणयावलोकैः १२ पृच्छतेमा लता बाहूनप्याश्लिष्टा वनस्पतेः नूनं तत्करजस्पृष्टा
बिभ्रत्युत्पुलकान्यहो १३ इत्युन्मत्तवचो गोप्यः कृष्णान्वेषणकातराः लीला भगवतस्तास्ता ह्यनुचक्रुस्तदात्मिकाः १४
कस्याश्चित्पूतनायन्त्याः कृष्णायन्त्यपिबत्स्तनम् तोकायित्वा रुदत्यन्या पदाहन् शकटायतीम् १५

या कुन्दकुसुमस्रजो गन्धः कुलपते श्रीकृष्णस्य वाति आगच्छति ११ फलभारेण नतांस्तरून् कृष्णः इमान्प्रणतान्दृष्ट्वा इति मत्वा प्रियया सह तस्य गतिविलाससम्भा
वयन्त्यः पृच्छति बाहुमिति तुलसिकाया अलिकुलैस्तत्तदामोदमदान्धैरन्वीयमान गम्यमान इह चरन्निति १२ काश्चिदाहुः हे सख्य इमा लता कृ
ष्णेन सङ्गवानूनमतः इमाः पृच्छत ननु स्वपतिसङ्गतोऽतत्सङ्गतिर्दुर्घटा भूः वनस्पतेः पत्युर्बाहूनाश्लिष्टा अपि अहो भाग्यं नूनं तन्नखैः स्पृष्टा यत उत्पु
लकानि बिभ्रति नहि स्वपतिसङ्गतादीदृक्पुलकसम्भव इति भावः १३ उन्मत्तवत् पप्रच्छुरित्येतत् प्रपञ्चितम् इदानीं रमापतेर्लीलास्ताश्च राजगृहु तदा
त्मिका इति यदुक्तं तत्प्रपञ्चयति इतीति उन्मत्तवचो गोप्यः उन्मत्तवचसः ता गोप्यश्च कृष्णान्वेषणेन कातरा अतिविह्वला अनुचक्रुः अनुकृतवत्यः
१४ कस्याश्चिदित्यादिभिश्चतुर्भिरनुकरणं प्रपञ्च्यते तत्र चतुर्भिस्तन्मयत्वं पुनरेकेनानुकरणमिति विवेकः पूतनायन्त्याः पूतनावदाचरन्त्याः कृष्णवदा
चरन्ती स्तनमपिबत् तोकायित्वा तोकवदात्मानं कृत्वा १५ ५ ५ ५ ५ ५
गोपीजनमनरञ्जनाय नतिं सततम् ५ ५ ५ ५ ५

दैत्यायित्वा दैत्यवदात्मानंकृत्वा एका कृष्णार्भभावनांकृष्णस्यार्भबाल्यंभावयतितामन्यांजहार १६ १७ दूरगाद्दूरे वर्त्तमानागाः यद्वत् यथाकृष्णस्तथाहूयतंकृष्णमनु
वर्त्ततीमनुवर्त्तमानाम् अनुकुर्वतीमितिवापाठः १८ १९ यतंतीप्रयत्नंकुर्वतीअंबरमुत्तरीयंवस्त्रंउन्निदधे ऊर्ध्वंधृतवती २० २१ अपिदध्वंनिमीलयत २२ सु
दृक्सुनयनमास्यंपिधाय सुदृक्वराक्षीतिवा भीतिविडंबनंभयानुकरणम् २३ एवंपुनरपिवृंदावनेलतास्तरूंश्चकृष्णंपृच्छंत्योवनोद्देशेवनप्रदेशेव्यचक्षत अ
पश्यन् २४ २५ सुपृक्तानिसंमिश्राणि २६ तेनअंसेन्यस्तः प्रकोष्ठोयस्याःकरेणोःहस्तिन्याः २७ रहःएकांतस्थानम् २८ हेआल्यःसख्यः अहोधन्या

दैत्यायित्वांजहारान्यामेकाकृष्णार्भभावनाम् रिंगयामासकाऽप्यंघ्रीकर्षंतीघोषनिस्स्वनैः १६ कृष्णरामायितेद्वेतुगोपायंत्यश्चका
श्चन वत्सायतींहंतिचान्यातत्रैकातुबकायतीम् १७ आहूयदूरगायद्वत्कृष्णस्तमनुकुर्वतीम् वेणुंक्वणंतींक्रीडंतीमन्याःशंसं
तिसाध्विति १८ कस्यांचित्स्वभुजंन्यस्यचलंत्याहापराननु कृष्णोऽहंपश्यतगतिंललितामितितन्मनाः १९ माभैष्टवातवर्षा
भ्यांतत्त्राणंविहितंमया इत्युक्त्वैकेनहस्तेनयतंत्युन्निदधेऽंबरम् २० आरुह्यैकापदाक्रम्यशिरस्याहापरांनृप दुष्टाहेगच्छजा
तोऽहंखलानांननुदंडधृक् २१ तत्रैकोवाचहेगोपादावाग्निंपश्यतोल्बणम् चक्षूंष्याश्वपिदध्वंवोविधास्येक्षेममंजसा २२ बद्धा
न्ययास्रजाकाचित्तन्वीतत्रउलूखले भीतासुदृक्पिधायास्यंभेजेभीतिविडंबनम् २३ एवंकृष्णंपृच्छमानावृंदावनलतास्तरून्
व्यचक्षतवनोद्देशेपदानिपरमात्मनः २४ पदानिव्यक्तमेतानिनंदसूनोर्महात्मनः लक्ष्यंतेहिध्वजांभोजवज्रांकुशयवादिभिः २५
तैस्तैःपदैस्तत्पदवीमन्विच्छंत्योऽग्रतोऽबलाः वध्वाःपदैःसुपृक्तानिविलोक्यार्ताःसमब्रुवन् २६ कस्याःपदानिचैतानियातायानं
दसूनुना अंसन्यस्तप्रकोष्ठायाःकरेणोःकरिणायथा २७ अनयाऽराधितोनूनंभगवान्हरिरीश्वरः यन्नोविहायगोविंदःप्री
तोयामनयद्रहः २८ धन्याअहोअमीआल्योगोविंदांघ्र्यब्जरेणवः यान्ब्रह्मेशौरमादेवीदधुर्मूर्ध्न्यघनुत्तये २९ तस्याअमूनि
नःक्षोभंकुर्वंत्युच्चैःपदानियत् यैकाऽपहृत्यगोपीनांरहोभुंक्तेऽच्युताधरम् ३० नलक्ष्यंतेपदान्यत्रतस्यानूनंतृणांकुरैः खिद्यत्सु
जातांघ्रितलामुन्निन्येप्रेयसींप्रियः ३१ अत्रप्रसूनावचयःप्रियार्थेप्रेयसाकृतः प्रपदाक्रमणेएतेपश्यतासकलेपदे ३२ केशप्र
साधनंत्वत्रकामिन्याःकामिनाकृतम् तानिचूडयताकांतामुपविष्टमिहध्रुवम् ३३

अतिपुण्यागोविंदांघ्र्यब्जरेणवः तत्रहेतुः यानिति
अस्माभिरप्येतद्रेणुभिषेकेण तथैवकृष्णःप्राप्तुंशक्यतइतिभावः २९ अन्याआहुः तस्याइति गोपीनांसर्वस्वम् अयंभावः भवेदेवंयदितस्याःपदानिसंपृ
क्तानिनभवेयुः तानितुनोदुःखंकुर्वंतीति ३० तदसंपृक्तान्केवलकृष्णपादरेणूनेवविचिन्वंत्यः तान्दृष्ट्वापुनरत्यंतंसमतपन् तदाहश्लोकत्रयेण नलक्ष्यंतइति
खिद्यती सुजातेसुकुमारे अंघ्रितलेयस्यास्तामुन्निन्ये स्कंधमारोपितवान् ३१ प्रपदाभ्यामाक्रमणंक्षोणीमर्दनंययोः अतएवासकलेपदेपश्यतेति ३२ तस्याःकृ
ष्णाजान्वंतउपविष्टायाः चिन्हंदृष्ट्वाऽहुः केशप्रसाधनमिति कांतामधिकृत्यतानिप्रसूनानिचूडयताचूडानुकारेणबध्नताध्रुवमुपविष्टम् ३३

रमेइन्यमदिसुकोक्ति आत्मरत स्वतस्तुष्ट आत्माराम स्वक्रीड अस्वडित स्त्रीविभ्रमैरनाकृष्टोऽपितयान्वेत किमितिरेमे अतआह कामिनामिति ३५ ३५ स्त्री
णमदुरात्मनामाह सान्वेति हाम्याम् समोयानमागमनसाधनयासातागोपी हित्वामामभजनइतिहेतोरस्मानपरिष्ठमेनइति ३६ ३७ कामिनादैन्यदर्शयति स्त्र
भुक्तइति अस्वडितत्वमाह ततश्चेति तस्यास्कधारोहोद्यतायामतर्द्दितइत्यर्थ ३८ अनुतापमाह हानाथेति ३९ अन्विच्छन्त्योमृगयमाणा अविदूरत समीपे
४० ४१ ततस्तयाऽपिसहिता कृष्णान्वेषणायवनमविशन् ततोहरेरन्वेषणान्निवृत्ता ४२ एवंतमप्राप्ताअपिस्वगृहान्नवस्मृतवत्य तदात्मिका सएवात्मायासा
ता तन्मय्यइत्यर्थ ४३ कितु पूर्वयत्रश्रीकृष्णेनसगतिरासीत्तदेवकालिंद्या पुलिनमागत्यकृष्णभावयाति ध्यायंतीतितथाता कृष्णस्यागमनकांक्षिन्यसा

रमेतयाचात्मरत आत्मारामोऽप्यखडित कामिनादर्शयन्दैन्यस्त्रीणाचैवदुरात्मताम् ३४ इत्येवंदर्शयत्यस्तास्चेरुर्गोप्योवि
चेतस यागोपीमनयत्कृष्णोविहायान्या स्त्रियोवने ३५ साचमेनेतदात्मानवरिष्ठसर्वयोषिताम् हित्वागोपी कामयानामाम
सौभजतेप्रिय ३६ ततोगत्वावनोद्देशंदृप्ताकेशवमब्रवीत् नपारयेऽहचलितुनयमायत्रतेमन ३७ एवमुक्त प्रियामाहस्कंध
मारुह्यतामिति ततश्चांतर्दधेकृष्ण सावधूरन्वतप्यत ३८ हानाथरमणप्रेष्ठक्वासिक्वासिमहाभुज दास्यास्तेकृपणायामेसखे
दर्शयसन्निधिम् ३९ श्रीशुकउवाच अन्विच्छन्त्योभगवतोमार्गंगोप्योविदूरत ददृशु प्रियविश्लेषमोहि
तादु खितासतीम् ४० तयाकथितमाकर्ण्यमानप्राप्तिचमाधवात् अवमानचदौरात्म्याद्विस्मयपरमययु ४१ ततोविशन्
वनंचद्रज्योत्स्नायावद्विभाव्यते तम प्रविष्टमालक्ष्यततोनिववृतु स्त्रिय ४२ तन्मनस्कास्तदालापास्तद्विचेष्टास्तदात्मिका
तद्गुणानेवगायत्योनात्मागाराणिसस्मरु ४३ पुन पुलिनमागत्यकालिंद्या कृष्णभावना समवेताजगु कृष्णतदागमनका
क्षिता ४४ इतिश्रीभागवतेमहापुराणेदशमस्कंधेरासक्रीडायांत्रिंशत्तमोऽध्याय ३० गोप्यऊचु जय
तितेऽधिकजन्मनाव्रज श्रयतइंदिराशश्वदत्रहि दयितदृश्यतादिक्षुतावकास्त्वयिधृतासवस्त्वाविचिन्वते १

ता मिलिता सत्य कृष्णमेवजगुरिति ४४ इतिदशमेटीकायांत्रिंशत्तमोऽध्याय ३० एकत्रिंशेनिराशास्ता पुन पुलिनमागता कृष्णमेवानु
गायत्य प्रार्थयतेतदागमम् १ जयतीति हे दयित तेजन्मनाव्रज अधिकयथाभवतितथाजयति उत्कर्षेणवर्त्तते यस्मात्समत्रजातस्तस्मादिंदिरालक्ष्मी
अत्रहिदृश्यते व्रजमलकृत्यवर्त्तते एवंव्रजेसर्वस्मिन्मोदमानेअनतावकास्त्वदीयागोपीजनास्त्वयित्वदर्थमेवकथंचित् धृताअसवोयैस्तेत्वांविचिन्वते अत
स्त्वया दृश्यताप्रत्यक्षीभूयतामिति यद्वा अस्माभिर्भवान्दृश्यताम् यद्वा एवत्वयादृश्यतामेतेविचिन्वतइति १ ७ ५ ७

अत्रस्यतत्राणा बहूनांवक्तृत्वादपराआहुरितिसर्वश्लोकेष्ववतारणा अथापिसंगतिरुच्यते तन्नविचिन्वंतु ममकिमितिचेत्तत्राहु. शरदिति शरदुदाशयेशरत्काला नेसरसिसाधुजात सम्यक्जातयत्सरसिजंविकसितंपद्मंतस्यउदरेगर्भेयाश्रीस्तांमुष्णातिहरतीतितथातयादृशानेत्रेण हेसुरतनाथसंभोगपते वरद अभीष्टप्रद अ शुल्कदासिकाअमूल्यदासी: निघ्नतोमारयतस्तेतवत्वयाक्रियमाण इहलोकेऽयंवधोनभवतिकिंशस्त्रेणैववधोवधः किंदृशावधोनभवति किंतु भवत्येव अतस्तवदृ शाऽपहृतप्राणप्रत्यर्पणाय त्वयादृश्यतामिति यथासंभवसर्वत्रवाक्यशेषः २ किंच बहुभ्योमृत्युभ्यःकृपयारक्षित्वाकिमितीदानींदृशामन्मथप्रेष्यघातयसीत्या हु: विषेति हेऋषभश्रेष्ठ विषमयाज्जलाद्योऽप्ययोनाशस्तस्मात्तथाव्यालराक्षसात् अघासुरात् वर्षात् मारुतात् वैद्युतानलात् अशनिपातात् वृषोऽरिष्टःतस्मा त् मयात्मजात् व्योमात् विश्वतःअन्यस्मादपिसर्वतोभयाच्चकालियदमनादिनारक्षिताः किमिदानीमुपेक्षसइतिभाव: ३ अपिच विश्वपालनायावतीर्णस्य तवभक्तोपेक्षाऽत्यंतमनुचितेत्याशयेनाहुः नखल्विति हेसखे भवान् खलुनिश्चितंयशोदासुतोनभवति किंतु सर्वप्राणिनांबुद्धिसाक्षी ननुसकिंदृश्योभ

शरदुदाशयेसाधुजातसत्सरसिजोदरश्रीमुषादृशा सुरतनाथतेऽशुल्कदासिकावरदनिघ्नतोनेहकिंवधः २ विषजलाप्यया द्व्यालराक्षसाद्वर्षमारुताद्वैद्युतानलात् वृषमयात्मजाद्विश्वतोभयादृषभतेवयंरक्षितामुहुः ३ नखलुगोपिकानंदनोभवान खिलदेहिनामंतरात्मदृक् विखनसाऽर्थितोविश्वगुप्तयेसखउदेयिवान्सात्वतांकुले ४ विरचिताभयंवृष्णिधुर्यतेचरण मीयुषांसंसृतेर्भयात् करसरोरुहंकांतकामदंशिरसिधेहिनःश्रीकरग्रहम् ५ व्रजजनार्त्तिहन्वीरयोषितांनिजजनस्मयध्वंस नस्मित भजसखेभवत्किंकरीःस्मनोजलरुहाननंचारुदर्शय ६ प्रणतदेहिनांपापकर्शनंतृणचरानुगंश्रीनिकेतनम् फणिफ णार्पितंतेपदांबुजंकृणुकुचेषुनःकृंधिहृच्छयम् ७ मधुरयागिरावल्गुवाक्ययाबुधमनोज्ञयापुष्करेक्षण विधिकरीरिमावीर मुह्यतीरधरसीधुनाऽप्याययस्वनः ८

वतितत्राहुः विखनसाब्रह्मणाविश्वपालनायप्रार्थितःसन्सात्वतांकुलेउदेयिवान् उदितइति ४ तस्मात्त्वद्भ क्तानामस्माकमेतत्प्रार्थनाचतुष्टयंसंपादयेत्याहुः विरचिताभयमित्यादिचतुर्भिः हेवृष्णिधुर्य संसृतेर्भयात्तेचरणमीयुषांशरणंप्राप्तानांप्राणिनांविरचितंदत्तमभयं येनतत्तथा हे कांत कामदंवरदंतथाश्रियःकरंगृह्णातीतितथातत् भवत्करसरोरुहंनः शिरसिधेहि ५ हेव्रजजनार्त्तिहन् हेवीरनिजजनानांयस्स्मयोगर्वस्तस्यध्वं सनंनाशकंस्मितंयस्य तथाभूत हे सखे भवत्किंकरीर्नः अस्मान्भजआश्रय स्मेतिनिश्चितम् प्रथमंतावज्जलरुहाननंचारुयोषितांनोदर्शय ६ अविशेषे णप्रणतानांदेहिनांपापकर्शनंपापहंतृ तृणचरान्पशूनप्यनुगच्छतिकृपयेतितथासौभाग्येनश्रियोनिकेतनम् वीर्यातिरेकेणफणिनः फणास्वर्पितंतेपदांबुजंनःकुचे षुकृणुकुरु किमर्थंहृच्छयंकामंकृंधिछिंधि ७ हेपुष्करेक्षण तवैव मधुरयागिरावल्गूनिवाक्यानियस्यांतया बुधानांमनोज्ञयात्हृद्ययागंभीरयेत्यर्थः मुह्यतीः इमाः नोविधिकरीः किंकरीः अधरसीधुना आप्याययस्व संजीवयेति ८

किंच अस्माकं त्वद्विरहे प्राणमेव मरणम् किंतु त्वत्कथाऽमृतपानपराः सुकृतिनः सर्वोत्तमिस्याहु तवेति कथैवामृतम् अत्र हेतु तप्तजीवनम् भक्तस्यामृतादुत्कर्ष
माह कविभि ब्रह्मादिभिरपीडितं स्तुतम् देवभोग्यत्वमृतं तैस्तुच्छीकृतम् किंच कल्मषपापहं कामकर्मनिरसनम् तत्त्वमृतं नैव मृतम् किंच श्रवणमंगलं श्रवण
मात्रेणमंगलप्रदम् तत्त्वनुष्ठानापेक्षम् किंच श्रीमत्सुशांतं तु मादकम् एवंभूतं त्वत्कथामृतं भुवि यथा भवति तथा ये भुवि गृणंति निरूपयंति ते जना भू
रिदा बहुदातारः जीवितं ददतीत्यर्थ यद्वा एवंभूतं त्वत्कथाऽमृतं ये भुवि गृणंति ते भूरिदाः पूर्वजन्मसु बहुदत्तवंत सुकृतिन इत्यर्थ एतदुक्तं भवति ये केवलं
कथाऽमृतं गृणंति तेऽपि तावदतिधन्याः किंपुनः ये त्वां पश्यंति अत भावयामहे त्वया दर्शनामिति ९ ननु मत्कथाश्रवणेनैव निर्वृता भवत्य तत्किं मद्दर्शनेन
त्वद्विलाससुभितचित्ता वयम् तथापि शांतिं न विंदाम इत्याहु प्रहसितमिति हे प्रिय कुहक कपट संविद संकेतनर्माणि १० किंच त्वयि वयमति प्रेमार्द्रचित्ता
त्वं पुनरस्मासु केन हेतुना कपटमाचरसीत्याहुः श्लोकद्वयेन चलसीति हे नाथ हे कांत यत्त्वं यदा व्रजाच्चलसि पशून्चारयन् तदा ते नलिनसुंदरं कोमलं ते पदं शि
लैः कठिनैः तृणैरंकुरैश्च सीदति क्लिश्यते इति नो मनः कलिलतामस्वास्थ्यं गच्छति प्राप्नोति एवंभूतास्त्वद्धु त्वच्छंकितचित्ता वयम् ११ त्वं तु दिनपरिक्षये सायं

तवकथाऽमृतंतप्तजीवनंकविभिरीडितंकल्मषापहम् श्रवणमंगलंश्रीमदाततंभुविगृणंतितेभूरिदाजना ९ प्रहसितंप्रियप्रेमवीक्षणंवि
हरणंचतेध्यानमंगलम् रहसिसंविदोयाहृदिस्पृशः कुहकनोमन क्षोभयंतिहि १० चलसियद्व्रजाच्चारयन्पशून्नलिनसुंदरंनाथते
पदम् शिलतृणांकुरैः सीदतीतिन कलिलतांमन कांतगच्छति ११ दिनपरिक्षयेनीलकुंतलैर्वनरुहाननंबिभ्रदावृतम् घनरजस्वलं
दर्शयन्मुहुर्मनसिनस्मरंवीरयच्छसि १२ प्रणतकामदंपद्मजार्चितंधरणिमंडनंध्येयमापदि चरणपंकजंशंतमंचतेरमणनःस्तनेष्वर्पयाधिह
न् १३ सुरतवर्धनंशोकनाशनंस्वरितवेणुनासुष्ठुचुंबितम् इतररागविस्मारणंनृणांवितरवीरनस्तेऽधरामृतम् १४ अटतियद्भवानह्निका
ननंत्रुटिर्युगायतेत्वामपश्यताम् कुटिलकुंतलंश्रीमुखंचतेजडउदीक्षतांपक्ष्मकृद्दृशाम् १५

काले नीलकुंतलैरावृतं घनरजस्वलं गोरजश्छुरितं वनरुहा
ननं अलिमालाकुलपरागच्छुरितपद्मतुल्यमाननं बिभ्रत् त्वं मुहुर्मुहुर्दर्शयन् नो मनसि केवलं स्मरं यच्छसि अर्पयसि न तु संगं ददासीति कपट इति भाव १२ अतोऽधुना
कपटं विहाय एवं कुर्विति प्रार्थयंति श्लोकद्वयेन प्रणतकामदमिति हे आधिहन् हे रमण पद्मजेनार्चितं आपदि ध्येयं ध्यानमात्रेणापन्निवर्तकम् शंतमं च सेवास
मयेऽपि सुखतमं ते चरणपंकजं कामतापशांतये नः स्तनेष्वर्पयेति १३ अपिच हे वीर तेऽधरामृतं नो वितर देहि स्वरितेन नादितेन वेणुना सुष्ठु चुंबितमिति मा
दामृतवासितमिति भाव इतररागविस्मारणम् नृणामितरेषु सार्वभौमादिसुखेषु रागमिच्छां विस्मारयति विलापयतीति तथा तत् १४ किंच क्षणमपि त्वद
दर्शने दुःखं दर्शने च सुखं रस्या सर्वसंगपरित्यागेन यत्तद्वयं त्वामुपागतास्त्वं तु कथमस्मान् त्यक्तुमुत्सहसे इति सकरुणमूचु अटतीति द्वयेन यद्यदा भवान्
काननं वृंदावनं प्रति अटति गच्छति तदा त्वामपश्यतां प्राणिनां त्रुटिः क्षणार्द्धमपि युगवद्भवति एवमदर्शने दुःखमुक्तम् पुनश्च कथंचिदह्नांते तव श्रीमन्मुखं पु
दृश्यमीक्षमाणानां ते पक्ष्मकृत् ब्रह्मा जडो मंद एव निमेषमात्रमपि अंतरमसह्यमिति दर्शने सुखमुक्तम् १५

यस्मात् हे अच्युत पतीन् सुतान् अन्वयान् तत्संबंधिनः भ्रातॄन् बांधवांश्चातिविलंघ्य तवसमीपमागताः वयम् कथंभूतस्य गतिविदः अस्मदागमनं जानतः गीतगतीर्जानतः गतिविदो वयंवा तवोद्गीतेनोच्चैर्गीतेन मोहिताः हे कितव शठ एवंभूता योषितः निशि स्वयमागतास्त्वां ऋते कस्त्यजेत् नकोऽपीत्यर्थः १६ अतस्त्वयात्यक्तानामस्माकं भाक्तनत्वद्दर्शनं निदानं तद्द्रोगस्य त्वत्संगएवचिकित्सा कुर्वित्याशयेनाहुः द्वयेन रहसीति श्रियो धाम ते बृहद्विशालमुरश्च वीक्ष्य अतिस्पृहा भवति तथाच मुहुर्मुहुर्मनो मुह्यतीति १७ तवच व्यक्तिराभिव्यक्तिर्व्रजवनौकसां सर्वेषामविशेषेण वृजिनहंत्री दुःखनिरसनीति विश्वमंगलं सर्वमंगलरूपाच अतस्त्वत्स्पृहारूढमनसां नः मनाक् ईषत्किमपि त्यज मुंच कार्पण्यं अकुर्वन् देहीत्यर्थः किंतत् स्वजनहृद्रोगाणां यदतिगोप्यं निषूदनं निवर्त्तकमौषधं तत् त्वमेव वेत्सीति गूढाभिप्रायम् १८ अतिप्रेमधर्षिताः रुदंत्य आहुः यदिति हे प्रिय यत्ते तव सुकुमारपदाब्जं कठिनेषु कुचेषु संमर्दनशंकिताः शनैर्दधी

पतिसुतान्वयभ्रातृबांधवानतिविलंघ्य तेऽन्त्यच्युतागताः गतिविदस्तवोद्गीतमोहिताः कितवयोषितः कस्त्यजेन्निशि १६ रहसि संविदं हृच्छयोदयं प्रहसिताननं प्रेमवीक्षणम् बृहदुरः श्रियो वीक्ष्य धाम ते मुहुरतिस्पृहा मुह्यते मनः १७ व्रजवनौकसां व्यक्तिरंग ते वृजिनहंत्र्यलं विश्वमंगलम् त्यज मनाक् च नस्त्वत्स्पृहात्मनां स्वजनहृद्रुजां यन्निषूदनम् १८ यत्ते सुजातचरणांबुरुहं स्तनेषु भीताः शनैः प्रिय दधीमहि कर्कशेषु तेनाटवीमटसि तद्व्यथते न किंस्वित् कूर्पादिभिर्भ्रमति धीर्भवदायुषां नः १९ इति श्रीभाग० महा० दश० गोपीकृतकृष्णस्तुतिर्नाम एकत्रिंशोऽध्यायः ३१ श्रीशुक उवाच इति गोप्यः प्रगायंत्यः प्रलपंत्यश्च चित्रधा रुरुदुः सुस्वरं राजन् कृष्णदर्शनलालसाः १ तासामाविरभूच्छौरिः स्मयमानमुखांबुजः पीतांबरधरः स्रग्वी साक्षान्मन्मथमन्मथः २ तं विलोक्यागतं प्रेष्ठं प्रीत्युत्फुल्लदृशोऽबलाः उत्तस्थुर्युगपत्सर्वास्तन्वः प्राणमिवागतम् ३ काचित्करांबुजं शौरेर्जगृहेऽञ्जलिना मुदा काचिद्दधार तद्बाहुमंसे चंदनभूषितम् ४ काचिदंजलिनाऽगृह्णात्तन्वी तांबूलचर्वितम् एका तदंघ्रिकमलं संतप्ता स्तनयोरधात् ५ एका भ्रुकुटिमाबध्य प्रेमसंरंभविह्वला घ्नंतीवैक्षत्कटाक्षेपैः संदष्टदशनच्छदा ६ अपराऽनिमिषद्दृग्भ्यां जुषाणा तन्मुखांबुजम् आपीतमपि नातृप्यत्संतस्तच्चरणं यथा ७

महि धारयेम वयम् त्वं तु तेनाटवीमटसि नयसीति पाठे पशून्वा कांश्चिदन्यान्वा आत्मानमेव वा नयसि आपयसि तत्तत्र तत्पदांबुजं वा कूर्पादिभिः सूक्ष्मपाषाणादिभिः किंस्विन्न व्यथते कथं तु नाम न व्यथेतेति भवानेवायुर्जीवनं यासां तासां नो धीर्भ्रमति मुह्यतीति १९ इति दशमे टीकायामेकत्रिंशोऽध्यायः ३१ द्वात्रिंशे विरहालापविक्लिन्नहृदयो हरिः तत्राविर्भूय गोपीस्ताः सांत्वयामास मानयन् १ स्वप्रेमाम्बुलकल्लोलविह्वलीकृतचेतसः सदयं नंदयन् गोपीरुद्गतो नंदनंदनः २ इति गोप्य इति इति एवंप्रकाराणि चित्रधा अनेकधा सुस्वरमुच्चैः कृष्णदर्शने लालसा अतिस्पृहा यासां ताः १ साक्षान्मन्मथमन्मथः जगन्मोहनस्य कामस्यापि मनस्युद्भूतः कामः साक्षात्तस्यापि मोहक इत्यर्थः २ तन्वः करचरणादयः ३ ४ अंजलिना संहतहस्तद्वयेन ५ भ्रुकुटीं भ्रुवावाब्ध्य कुटिलीकृत्य प्रेमसंरंभेण प्रणयकोपावेशेन विह्वला विवशा दष्टाधरोष्ठा कटाक्षाः कटाक्षास्त एव क्षेपा आक्षेपाः परिभवास्तैः ताडयंतीव ऐक्षत ६ अनिमिषंतीभ्यामनिमीलंतीभ्यां दृग्भ्यामापीतमपि सम्यक् दृष्टमपि पुनः पुनः जुषाणा नातृप्यत् ७

तृतीयप्रश्नोत्तरं भजतोऽपीति अयमर्थः तेतु चतुर्विधाः एके आत्मारामाः अपरागदृशः केचिदाप्तकामाः प्रियदर्शनेऽपि पूर्णकामत्वेन भोगेच्छारहिताः अन्येऽकृतज्ञा मूढाः अन्येतु गुरुद्रुहः अतिकठिनाः सपितायस्तु पोषक इति न्यायादुपकर्त्ता गुरुतुल्यस्तस्मै द्रुह्यंतीति तथा ते १९ अत्र चरमकोटिगतमात्मानं मत्वा अक्षिसंकोचैः परस्परं गूढस्मितमुखीस्ता दृष्ट्वाह नाहंत्विति हेसख्यः अहं तेषामध्येन कोऽपि किंतु परमकारुणिकः परमसुहृच्च कथम् अमीषां भजतामनुवृत्तिवृत्तये निरंतरध्यानप्रवृत्त्यर्थं तान् न भजामि एतत्सदृष्टांतमाह यथेति तस्य धनस्यैव चिंतया निभृतः पूर्णो व्याप्त इति यावत् अन्यत् क्षुत्पिपासाद्यपि न वेद २० एवं मदर्थोज्झितलोकवेदस्वानां मदर्थे उज्झितः लोकः युक्तायुक्तप्रतीक्षणाद्वेदश्च धर्माधर्मप्रतीक्षणात्स्वाः ज्ञातयश्च स्नेहत्यागात् याभिस्तासां वो युष्माकं परोक्षं मदर्शनं यथा भवति तथा भजता युष्मत्प्रेमालापान् शृण्वतैव तिरोहितम् अंतर्धानेन स्थितम् तत्तस्मात् हे अबलाः हे प्रियाः मा माम् असूयितुं दोषारोपेण द्रष्टुं यूयं मार्हथ न योग्याः स्थ २१ आस्तामिदं परमार्थं तु शृणुतेत्याह नेति निरवद्या संयुक् संयोगो यासां तासां वः विबुधानामायुषाऽपि चिरकालेनापि स्वीयसाधुकृत्यं प्रत्युपकारं कर्त्तुं न पारये न शक्नोमि कथंभूतानां या मा भजन्

भजतोऽपि न वै केचित् भजंत्यभजतः कुतः आत्मारामा ह्याप्तकामा अकृतज्ञा गुरुद्रुहः १९ नाहं तु सख्यो भजतोऽपि जंतून् भजाम्यमीषामनुवृत्तिवृत्तये यथाऽधनो लब्धधने विनष्टे तच्चिंतयाऽन्यन्निभृतो न वेद २० एवं मदर्थोज्झितलोकवेदस्वानां हि वो मय्यनुवृत्तयेऽबलाः मयापरोक्षं भजता तिरोहितं मासूयितुं माऽर्हथ तत्प्रियं प्रियाः २१ न पारयेऽहं निरवद्यसंयुजां स्वसाधुकृत्यं विबुधायुषाऽपि वः या माऽभजन् दुर्जरगेहशृंखलाः संवृश्च्य तद्वः प्रतियातु साधुना २२ इति श्रीभाग० महा० दश० द्वात्रिंशोऽध्यायः ३२ श्रीशुक उवाच

इत्थं भगवतो गोप्यः श्रुत्वा वाचः सुपेशलाः जहुर्विरहजं तापं तदंगोपचिताशिषः १ तत्रारभत गोविंदो रासक्रीडामनुव्रतैः स्त्रीरत्नैरन्वितः प्रीतैरन्योन्याबद्धबाहुभिः २ रासोत्सवः संप्रवृत्तो गोपीमंडलमंडितः योगेश्वरेण कृष्णेन तासां मध्ये द्वयोर्द्वयोः प्रविष्टेन गृहीतानां कंठे स्वनिकटं स्त्रियः ३ यं मन्येरन्नभस्तावद्विमानशतसंकुलम् दिवौकसां सदाराणामौत्सुक्यापहृतात्मनाम् ४

दुर्जराः अजरया गेहशृंखलास्ताः संवृश्च्य निःशेषं छित्वा माम् आमाम भजन् तासां मच्चित्तं तु बहुषु प्रेमयुक्तं तया नैवमेकनिष्ठम् तस्माद्वो युष्माकमेव साधुना साधुकृत्येन तद्युष्मत्साधुकृत्यं प्रतियातु प्रतिकृतं भवतु युष्मत्सौशील्येनैव ममानृण्यं न तु मत्कृतप्रत्युपकारेणेत्यर्थः २२ इति दशमे टीकायां द्वात्रिंशोऽध्यायः ३२ त्रयस्त्रिंशे ततो गोपीमंडलीमध्यगो हरिः प्रियास्ता रमयामास सद्गदिनी वनकेलिभिः १ तत्तदा अंग हे राजन् यद्वा तस्य भगवतोऽगेन वपुषा करचरणाद्यवयवैर्वा उपचिताः समृद्धाः आशिषः यासां ताः १ रासक्रीडाम् रासो नाम बहुनर्त्तकीयुक्तो नृत्यविशेषः तां क्रीडाम् अन्योऽन्यमाबद्धाः संग्रथिता बाहवो यैस्तैः सह २ तत्साहित्यमभिनयेन दर्शयति रासोत्सव इत्यक्षरचतुष्टयाधिकेन सार्द्धेन तासां मंडलरूपेणावस्थितानां द्वयोर्द्वयोर्मध्ये प्रविष्टेन तेनैव कंठे गृहीतानाम् उभयत आलिंगितानाम् कथंभूतेन यं सर्वाः स्त्रियः स्वनिकटं ममैवाश्लिष्टवानिति मन्येरन् तेन एतदर्थं द्वयोर्द्वयोर्मध्ये प्रविष्टेनेत्यर्थः नन्वेकस्य कथं तथा प्रवेशः सर्वसन्निहितत्वेवा कुतः स्वैकनिकटत्वाभिमानस्तासामित्यत उक्तं योगेश्वरेणेति अचिंत्यशक्तिनेत्यर्थः ३ तावत् तत्क्षणमेव औत्सुक्यव्याप्तमनसां सस्त्रीकाणां देवानां विमानशतैः संकीर्णं नभो बभूव ४ ७ ७ ७ ७

५ सामियायांकृष्णसहितानाम् तुमुल सङ्कीर्णः ६ महामरकतोनीलमणिरिव हैमानांमणीनामध्येमध्येताभिःस्वर्णवर्णाभिर्याभिःशुशुभे गोपीरत्याभिप्रायेण
जातिनैवमध्यपदावृत्तिमेकवचनम् ७ सप्रयत्नाभिःशुशुभे तथानात्राप्रियेतेनाविरेजुरित्याह पादन्यासैरिति भुजविधुतिभिः करचालनैर्भज्यमानैश्चमध्यैश्चलद्भिः
कुचैश्चपटैश्चगण्डलोलैः गण्डेषुचञ्चलैः स्विद्यन्मुख्य स्विद्यन्तिस्वेदयुक्तानिमुखानियासांता कबरेसुरशनाग्रन्थयश्चयोरदापासाम् यद्वा तेषुतत्सुचग्रन्थयः शिथि
लग्रन्थयश्चयस्य तत्रनानामूर्तिः कृष्णोमेघचक्रमिव तास्तुबहुविधास्तडित इव स्वेदस्तुषार इव गीतगर्जितमिवेतियथासम्भवमूह्यम् ८ नृत्यमाना नृत्यन्त्य रक्त
कण्ठ्य नानारागैरनुरञ्जितकण्ठ्य कृष्णस्याभिमर्शेनसंस्पर्शेनमुदिता इदंविश्वम् ९ मुकुन्देनसहस्वरजाती षड्जादिस्वरान्नालापगती अमिश्रिता कृष्णोन्नीताभि
रसङ्कीर्णा प्रीयमाणेनसमानिता तदेवास्तुन्नपनयेचध्रुवध्रुवाख्यतालविशेषयुक्ताउन्निन्ये उन्नीतवती १० एवंनृत्यगीतादिनाश्रीकृष्णसमानितानांतासामतिप्रीति

ततोदुंदुभयोनेदुर्निपेतु पुष्पवृष्टय जगुर्गंधर्वपतय सस्त्रीकास्तद्यशोमलम् ५ वलयानांनूपुराणांकिंकिणीनांचयोषिताम् सप्रिया
णामभूच्छब्दस्तुमुलोरासमण्डले ६ तत्रातिशुशुभेताभिर्भगवान्देवकीसुत मध्येमणीनांहैमानांमहामरकतोयथा ७ पादन्यासैर्भुज
विधुतिभिःसस्मितैर्भ्रूविलासैर्भज्यन्मध्यैश्चलकुचपटै कुण्डलैर्गण्डलोलैः स्विद्यन्मुख्य कबररशनाग्रन्थय कृष्णवध्वो गायन्त्यस्तंतडितइव
तामेघचक्रेविरेजु ८ उच्चैर्जगुर्नृत्यमानारक्तकण्ठ्योरतिप्रिया कृष्णाभिमर्शमुदितायद्गीतेनेदमावृतम् ९ काचित्समंमुकुन्देनस्व
रजातीरमिश्रिता उन्निन्येपूजितातेनप्रीयतासाधुसाध्विति तदेवध्रुवमुन्निन्येतस्यैमानंचबह्वदात् १० काचिद्रासपरिश्रान्तापा
र्श्वस्थस्यगदाभृत जग्राहबाहुनास्कन्धंश्लथद्वलयमल्लिका ११ तत्रैकांसगतंबाहुंकृष्णस्योत्पलसौरभम् चन्दनालिप्तमाघ्रायहृ
ष्टरोमाचुचुम्बह १२ कस्याश्चिन्नाट्यविक्षिप्तकुण्डलत्विषमण्डितम् गण्डंगण्डेसन्दधत्याअदात्ताम्बूलचर्वितम् १३ नृत्यतीगायतीकाऽ
पिकूजन्नूपुरमेखला पार्श्वस्थाच्युतहस्ताब्जंश्रान्ताधात्स्तनयोः शिवम् १४ गोप्योलब्ध्वाऽच्युतंकान्तंश्रियएकान्तवल्लभम् गृहीत
कण्ठ्यस्तद्दोर्भ्यांगायन्त्यस्तंविजह्रिरे १५ कर्णोत्पलालकविटङ्ककपोलघर्मवक्त्रश्रियोवलयनूपुरघोषवाद्यैः गोप्य समंभगवताननृतु
स्स्वकेशस्रस्तस्रजोभ्रमरगायकरासगोष्ठ्याम् १६

विलसितवृत्तमाह काचिदिति श्लथन्तिवलयानिमल्लिकाश्चयस्या सा ११ उत्पलस्यसौरभमिव
सौरभंयस्यतंबाहुम् १२ नाट्येननृत्येनविक्षिप्तयो श्चलयो कुण्डलयोस्त्विषेणालिप्तामण्डितगण्डकपोलंतथाभूतेस्वगण्डेसन्दधत्या संयोजयन्त्या १३ कूजन्तीनूपुरमे
खलाचयस्या सा १४ एवमन्याअपिगोप्योयथायथंनानाविभ्रमैर्विजह्रुरित्याह गोप्यइति १५ तत्रवादकेषुगायकेषुचसस्त्रीकेषुगन्धर्वकिन्नरादिषुरसावेशेन
मुग्धेषुनृत्यत्सुतान्याभेववाद्यादिसम्पत्तिदर्शयन्रासस्यसम्भ्रममाह कर्णोत्पलेति कर्णोत्पलैश्चअलकविटङ्कैः अलकालङ्कृतैः कपोलैश्चघर्मैश्चवक्त्रेषुश्री शोभायासां
ताःघोषाः किंकिण्य वलयनूपुरघोषैर्वाद्यैः वाद्यैः स्वकेशेभ्य स्रस्ता स्रजायासांता एतेनतालगतिसन्तुष्टा केशा सविरं कपपादेषुपुष्पवृष्टिमिवाकुर्वन्निस्रु
स्योक्तिम् भगवतासहननृतुः कृभ्रमराएवगायकायस्यारासस्सभायाम् १६ ५ ५ ५ ५ ५

यथागोप्योनानाविभ्रमैर्भगवतासहविजह्रुः एवंभगवानपिस्वविलासैस्ताभिः सहरेमइत्याह एवमिति तद्विलासानभिभूतस्यैवरतौदृष्टांतः यथाऽर्भकइति स्व
प्रतिबिंबैर्विभ्रमः क्रीडायस्यसइव अनेनैतद्दर्शितंस्वीयमेवसर्वकलाकौशलसौगंध्यलावण्यमाधुर्यादिचतासुसंचार्यताभिःसहरेमे यथाऽर्भकःस्वप्रतिबिंबैरि
ति १७ तास्तुभगवद्विलासैराकुलाबभूवुरित्याह तदंगेति तस्यांगसंगेनप्रकृष्टामुत्प्रीतिस्तयाकुलानिअवशानींद्रियाणियासांताः विश्लथबंधान्केशादीन
जसाप्रतिव्योढुं यथापूर्वंधर्तुंनालंनसमर्थाबभूवुः विस्रस्तामालाआभरणानिचयासांताः १८ नकेवलंताएवाकुलेंद्रियाः किंतुदेव्योपीत्याह कृष्णविक्रीडितमि
ति किंच शशांकश्चेति अनेनैतत्सूचितम् शशांकेनविस्मितेनगतौविस्मृतायांततः प्रभृतिनाः सर्वेऽपिग्रहाः तत्रतत्रैवतस्थुः ततश्चातिदीर्घासुरात्रिषुयथासु
खंविजह्रुरिति १९ किंच कृत्वेति अयंभावः कात्यायनिमहामायेमहायोगिन्यधीश्वरि नंदगोपसुतंदेविपतिंमेकुरुतेनमइतिप्रत्येकंताभिःप्रार्थनात् भगव

एवंपरिष्वंगकराभिमर्शस्निग्धेक्षणोद्दामविलासहासैः रेमेरमेशोव्रजसुंदरीभिर्यथाऽर्भकःस्वप्रतिबिंबविभ्रमः १७ तदंगसंग
प्रमदाकुलेंद्रियाः केशान्दुकूलंकुचपट्टिकांवा नांजःप्रतिव्योढुमलंव्रजस्त्रियोविस्रस्तमालाभरणाःकुरूद्वह १८ कृष्णविक्रीडितं
वीक्ष्यमुमुहुःखेचरस्त्रियः कामार्दिताःशशांकश्चसगणोविस्मितोऽभवत् १९ कृत्वातावंतमात्मानंयावतीर्गोपयोषितः रेमेसभ
गवांस्ताभिरात्मारामोऽपिलीलया २० तासामतिविहारेणश्रांतानांवदनानिसः प्रामृजत्करुणःप्रेम्णाशंतमेनांगपाणिना २१ गो
प्यःस्फुरत्पुरटकुंडलकुंतलत्विड्गंडश्रियासुधितहासनिरीक्षणेन मानंदधत्यृषभस्यजगुःकृतानिपुण्यानितत्कररुहस्पर्शप्रमोदाः
२२ ताभिर्युतःश्रममपोहितुमंगसंगघृष्टस्रजःसकुचकुंकुमरंजितायाः गंधर्वपालिभिरनुद्रुतआविशद्वाः श्रांतोगजीभिरिभराडि
वभिन्नसेतुः २३ सोऽम्भस्यलंयुवतिभिःपरिषिच्यमानःप्रेम्णेक्षितःप्रहसतीभिरितस्ततोऽंग वैमानिकैःकुसुमवर्षिभिरीड्य
मानोरेमेस्वयंस्वरतिरत्रगजेंद्रलीलः २४ ततश्चकृष्णोपवनेजलस्थलप्रसूनगंधानिलजुष्टदिक्तटे चचारभृंगप्रमदागणावृतो
यथामदच्युद्द्विरदःकरेणुभिः २५ ताऽपियातावलाव्रजंसिद्धामयेमारंस्यथक्षपाइतितथैवप्रतिश्रुतत्वात् तावंतमात्मानंकृत्वारेमेइति यावतीःयाव
त्यः २० कृपातिशयमाह तासामिति २१ ततोऽतिहृष्टानांगोपीनांचरितमाह गोप्यइति स्फुरतांस्वर्णकुंडलानांकुंतलानांचत्विषागंडेषुयाश्रीःतयासुधितेनामृ
तायितेनहाससहितेननिरीक्षणेनचऋषभस्यपत्युःकृष्णस्यमानंदधत्यःपूजांकुर्वत्यः तत्कर्माणिजगुः तस्यकररुहैःनखैःस्पर्शेनप्रमोदोयासांताः २२ अथज
लकेलिमाह ताभिरिति तासामंगसंगेनघृष्टासंमर्दितायास्रक्तस्याअतएवतासांकुचकुंकुमेनरंजितायाःसंबंधिभिर्गंधर्वपालिभिः गंधर्वपाःगंधर्वपतयस्तद्व
गायंतोयेअलयस्तैरनुद्रुतः अनुगतःसःकृष्णःवाःउदकमाविशत् भिन्नसेतुःविदारितवप्रः स्वयंचातिक्रांतलोकवेदमर्यादः २३ स्वरतिःआत्मारामोऽपि अत्र
गोपीमंडलेअंभसिवा २४ स्थलजलक्रीडेदर्शिते वनक्रीडांदर्शयति ततश्चेति यमुनायाउपवनेजलस्थलप्रसूनानांगंधोयस्मिन्तेनानिलेनजुष्टानिदिशां
तटानिअंतायस्मिन् यद्वा दिशश्चतटस्थलंचयस्मिन्नुपवनेभृंगाणांप्रमदानांचगणैरावृतः २५

रासक्रीडानिगमयति एवमिति स कृष्ण सत्यसंकल्प अनुरागिण्योऽबलागण यस्य एवं सर्वा निशा सेवितवान् शरत्काव्यकथारसाश्रया शारदीभवा का
व्येषु कथ्यमाना ये रसा तेषामाश्रयभूता निशा यद्वा निशा इति द्वितीया अत्यन्तसंयोगे शृङ्गाररसाश्रया शारदीप्रसिद्धा काव्येषु या कथास्ता सिषेवे इति
एवमप्यात्मन्येवावरुद्ध सौरत चरमधातु न तु स्खलितो यस्येति कामजयोक्ति २६ २७ प्रतीपं प्रतिकूलमधर्ममित्यर्थ आचरत् कृतवान् ननु इदमधर्मो
मा न कलञ्जभक्षणादिवत् किंतु महासाहसमित्याह परदाराभिमर्शनमिति २८ आप्तकामस्य नायमधर्म इति चेत् यद्येवं कामाभावान्निन्दितं केनाभिप्रायेण कृत
वानिति पृच्छति आप्तकाम इति २९ परमेश्वरे कैमुतिकन्यायेन परिहर्तुं सामान्यतो महतां वृत्तमाह धर्मव्यतिक्रम इति साहसं च दृष्टम् प्रजापतीन्द्रसोमविश्वामि
त्रादीनां च तेषां तेजस्विनां दोषाय न भवतीति ३० तर्हि यद्यदाचरति श्रेष्ठ इति न्यायेनान्योऽपि कुर्यादित्याशङ्क्याह नैतदिति अनीश्वरो देहादिपरतन्त्र तथारु

एवंशशाङ्कांशुविराजिता निशा ससत्यकामोऽनुरताबलागण सिषेवआत्मन्यवरुद्धसौरत सर्वा शरत्काव्यकथारसाश्रया २६ राजो
वाच संस्थापनाय धर्मस्य प्रशमायेतरस्य च अवतीर्णो हि भगवानंशेन जगदीश्वर २७ सकथंधर्मसेतूनां वक्ता कर्त्ताऽभिरक्षिता
प्रतीपमाचरद्ब्रह्मन्परदाराभिमर्शनम् २८ आप्तकामो यदुपति कृतवान्वै जुगुप्सितम् किमभिप्राय एतन्न संशयं छिन्धि सुव्रत २९
श्रीशुक उवाच धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम् तेजीयसां न दोषाय वह्ने सर्वभुजो यथा ३० नैतत्समाचरेज्जातु मनसाऽ
प्यनीश्वर विनश्यत्याचरन्मौढ्याद्यथारुद्रोऽब्धिजं विषम् ३१ ईश्वराणां वच सत्यं तथैवाचरितं क्वचित् तेषां यत्स्ववचोयुक्तं
बुद्धिमांस्तत्समाचरेत् ३२ कुशलाचरितेनैषामिह स्वार्थो न विद्यते विपर्ययेण वानर्थो निरहंकारिणां प्रभो ३३ किमुताखिलसत्त्वा
नां तिर्यङ्मर्त्यदिवौकसाम् ईशितुश्चेशितव्यानां कुशलाकुशलान्वय ३४ यत्पादपङ्कजपरागनिषेवतृप्ता योगप्रभावविधुताखिल
कर्मबन्धा स्वैरं चरन्ति मुनयोऽपि न नह्यमानास्तस्येच्छयात्तवपुष कुत एव बन्ध ३५ गोपीनां तत्पतीनां च सर्वेषामेव देहिनाम् योऽन्त
श्चरति सोऽध्यक्ष क्रीडनेनेह देहभाक् ३६ अनुग्रहाय भक्तानां मानुषं देहमास्थित भजते तादृशी क्रीडा या श्रुत्वा तत्परो भवेत् ३७

द्रव्यतिरिक्तो विषं भक्षयन् ३१ कथं तर्हि सदाचारस्य प्रामाण्यमत आह ईश्वराणामिति तेषां वच सत्यमतस्तदुक्तमाचरेदेव आचरितं क्वचित्सत्यमत
स्ववचोयुक्तम् तेषां च सा यदुक्तमविरुद्धं तत्तदेवाचरेत् ३२ ननु तर्हि तेऽपि किमेवं साहसमाचरन्ति तत्राह कुशलेति प्रारब्धकर्मक्षपणमात्रमेव तेषां कृत्यं नत्वा
न्यदित्यर्थ ३३ प्रस्तुतमाह किमुतेति कुशलाकुशलान्वयो न विद्यत इति किं पुनर्वक्तव्यमित्यर्थ ३४ एतदेव स्फुटीकरोति यस्य पादपङ्कजपरागस्य निषेवणेन तृप्ता
यद्वा यस्य पादपङ्कजपरागे निषेवा येषां ते तथा ते च ते तृप्ताश्चेति सत्कृतादित्यर्थ तथा ज्ञानिन न नह्यमाना बन्धनमप्राप्नुवन्त परदारत्वं गोपीनामङ्गीकृत्य परिहृतम्
३५ इदानीं भगवत सर्वान्तर्यामित्वेन परदारसेवा नाम न काचिदित्याह गोपीनामिति योऽन्तश्चरति अध्यक्षो बुद्ध्यादिसाक्षी स एव क्रीडनेन देहभाक् न त्वस्मदादितुल्यःऽये
न दोषः स्यादिति ३६ नन्वेवं चेदाप्तकामस्य निन्दितेषु कुत प्रवृत्तिरित्यत आह अनुग्रहायेति शृङ्गाररसाकृष्टचेतसोऽतिबहिर्मुखानपि स्वपरान् कर्तुमिति भाव ३७

नन्वन्येऽपिभिन्नाचाराःस्वचेष्टितमेवमेवेतिवदंतितत्राह नासूयन्निति एवंभूतैश्वर्याभावेतथाकुर्वंतःशापाज्ञेयाइतिभावः ३८ ब्रह्मरात्रेब्राह्ममुहूर्तेउपावृत्तेप्राप्ते ३९ भगवतःकामविजयरूपरासक्रीडाश्रवणादेःकामविजयमेवफलमाह विक्रीडितमिति अचिरेणधीरःसन्हृद्रोगंकाममाशुअपहिनोति परित्यजतीति ४० सेयंश्रीपरमानंदसेविश्रीधरनिर्मिता श्रीभागवतभावार्थदीपिकादशमाश्रया १ इतिदशमेटीकायांत्रयस्त्रिंशोऽध्यायः ३३ चतुस्त्रिंशेऽहिनाग्रस्तं नंदंहरिरमूमुचत् विद्याध्रंचांगिरःशापाच्छंखचूडंतथाऽवधीत् १ रासापदेशतःकामंकिंकरीकृत्यकामतः अनुगृह्णन्वशंनिन्येतथाविद्याधराधिपम् २ तदेवं

नासूयन्खलुकृष्णायमोहितास्तस्यमायया मन्यमानाःस्वपार्श्वस्थान्स्वान्स्वान्दारान्व्रजौकसः ३८ ब्रह्मरात्रउपावृत्तेवासुदेवानुमोदिताः अनिच्छंत्योययुर्गोप्यःस्वगृहान्भगवत्प्रियाः ३९ विक्रीडितंव्रजवधूभिरिदंचविष्णोःश्रद्धान्वितोऽनुशृणुयादथवर्णयेद्यः भक्तिंपरांभगवतिप्रतिलभ्यकामंहृद्रोगमाश्वपहिनोत्यचिरेणधीरः ४० इतिश्रीभाग०महा०दश०रासक्रीडावर्णनंनामत्रयस्त्रिंशोऽध्यायः ३३ श्रीशुकउवाच एकदादेवयात्रायांगोपालाजातकौतुकाः अनोभिरनडुद्युक्तैःप्रययुस्तेंऽबिकावनम् १ तत्रस्नात्वासरस्वत्यांदेवंपशुपतिंविभुम् आनर्चुरर्हणैर्भक्त्यादेवींचनृपतेंऽबिकाम् २ गावोहिरण्यंवासांसिमधुमध्वन्नमादृताः ब्राह्मणेभ्योददुःसर्वेदेवोनःप्रीयतामिति ३ ऊषुःसरस्वतीतीरेजलंप्राश्ययधृतव्रताः रजनींतांमहाभागानंदसुनंदकादयः ४ कश्चिन्महानहिस्तस्मिन्विपिनेऽतिबुभुक्षितः यदृच्छयागतोनंदंशयानमुरगोऽग्रसीत् ५ सचुक्रोशाहिनाग्रस्तःकृष्णकृष्णमहानयम् सर्पोमांग्रसतेतातप्रपन्नंपरिमोचय ६ तस्यचाक्रंदितंश्रुत्वागोपालाःसहसोत्थिताः ग्रस्तंचदृष्ट्वाविभ्रांताःसर्पंविव्यधुरुल्मुकैः ७ अलातैर्हन्यमानोऽपिनामुंचत्तमुरंगमः तमस्पृशत्पदाभ्येत्यभगवान्सात्वतांपतिः ८ सवैभगवतःश्रीमत्पादस्पर्शहताशुभः भेजेसर्पवपुर्हित्वारूपंविद्याधरार्चितम् ९ तमपृच्छद्धृषीकेशःप्रणतंसमुपस्थितम् दीप्यमानेनवपुषापुरुषंहेममालिनम् १० कोभवान्परयालक्ष्म्यारोचतेऽद्भुतदर्शनः कथंजुगुप्सितामेतांगतिंवाप्रापितोऽवशः ११ सर्पउवाच अहंविद्याधरःकश्चित्सुदर्शनइतिश्रुतः श्रियास्वरूपसंपत्त्याविमानेनाचरन्दिशः १२ ऋषीन्विरूपानांगिरसःप्राहसंरूपदर्पितः तैरिमांप्रापितोयोनिंप्रलब्धैःस्वेनपाप्मना १३

कामानुग्रहमुखेनकामजयंप्रतिपाद्यतथैवविद्याधरजयंप्रतिपादयितुंतत्प्रसंगंदर्शयति एकदेति १ २ गावः गाःमधुमधुरंमध्वन्नंमधुनासहितमन्नम् ३ जलमात्रंप्राश्ययोपोषिताःतांनिशांतत्रऊषुःन्यवसन् ४ महानहिरजगरःउरगःउरसागच्छन्नित्यलक्षितलमुक्तम् अग्रसीत्जग्रास ५ ६ विव्यधुःताडयामासुःउल्मुकैर्ज्वलत्काष्ठैः ७ अलातैःतैरेवोल्मुकैःहन्यमानोऽपितंनंदंयदानामुंचत् तदाभगवान्पदातमस्पृशत् ८ भगवतश्चरणस्पर्शमात्रेणैवहताशुभः विद्याधरैरर्चितंपूजितम् ९ गोपेभ्यात्मनऐश्वर्यंप्रकाशयितुमविद्वानिवतमपृच्छत् दीप्यमानेनवपुषासमवस्थितम् १० यःपरयाशोभयाप्रकाशतेसभवान्कइति ११ १२ प्राहसंउपहसितवानस्मि प्रलब्धैरुपहसितैःमदीयेनैवपापेननिमित्तेन १३

यत् यत शापत् १४ आपृच्छे स्वर्लोकं गन्तुमनुज्ञापान हेअमीवहन् दुःखनाशन १५ १६ १७ १८ १९ अहिदेहनिरस्तैवेमागुन्मत्तसुदर्शनम्
तद्दृष्ट्वादिनकृष्ण शङ्खचूडमताडयत् १ तत्रासमगात् कदाचिदिति २० विरजोऽम्बराविति विरजसौनिर्मलअम्बरेययोस्तौ २१ किञ्च निशामवेशसत्कुर्वती
उदितउडुपस्तारकाश्चयस्मिन्तत् मल्लिकागन्धेनमत्ता अलयोयस्मिन्तत् २२ अविस्ड्लादन्यैर्युगपत्कल्पयितुमशक्यमपितौस्वरमण्डलमूर्च्छितयुगपत्कल्पय

शापोमेऽनुग्रहायैवकृतस्तैः करुणात्मभिः यदहंलोकगुरुणापदास्पृष्टोहताशुभः १४ तत्वाऽहंभवभीतानांप्रपन्नानांभयापहम् आपृच्छे
शापनिर्मुक्तः पादस्पर्शादमीवहन् १५ प्रपन्नोऽस्मिमहायोगिन्महापुरुषसत्पते अनुजानीहिमांदेवसर्वलोकेश्वरेश्वर १६ ब्रह्मदण्डाद्वि
मुक्तोऽहंसद्यस्तेऽच्युतदर्शनात् यन्नामगृह्णन्नखिलान्श्रोतृनात्मानमेवच १७ सद्यः पुनातिकिंभूयस्तस्यस्पृष्टः पदाहिते इत्यनुज्ञाप्य
दाशार्हंपरिक्रम्याभिवन्द्यच सुदर्शनोदिवंयातःकृच्छ्रान्नन्दश्चमोचित १८ निशाम्यकृष्णस्यतदात्मवैभवंव्रजौकसोविस्मितचेतस
स्तत समाप्यतस्मिन्नियमंपुनर्व्रजंनृपाययुस्तत्कथयन्तआदृताः १९ कदाचिदथगोविन्दोरामश्चाद्भुतविक्रमः विजह्रतुर्वनेरात्र्यांमध्य
गौव्रजयोषिताम् २० उपगीयमानौललितंस्त्रीजनैर्बद्धसौहृदैः स्वलंकृतानुलिप्ताङ्गौस्रग्विणौविरजोऽम्बरौ २१ निशामुखंमानयन्ता
वुदितोडुपतारकम् मल्लिकागन्धमत्तालिजुष्टंकुमुदवायुना २२ जगतुः सर्वभूतानांमनःश्रवणमङ्गलम् तौकल्पयन्तौयुगपत्स्वरमण्डल
मूर्च्छितम् २३ गोप्यस्तद्गीतमाकर्ण्यमूर्च्छितानाविदन्नृप स्रंसद्दुकूलमात्मानंस्रस्तकेशस्रजंततः २४ एवंविक्रीडतोःस्वैरंगायतोःसंप्र
मत्तवत् शङ्खचूडइतिख्यातोधनदानुचरोऽभ्यगात् २५ तयोर्निरीक्षतोराजंस्तन्नाथंप्रमदाजनम् क्रोशन्तंकालयामासदिश्युदी
च्यामशङ्कित २६ क्रोशन्तंकृष्णरामेतिविलोक्यस्वपरिग्रहम् यथागादस्युनाग्रस्ताभ्रातरावन्वधावताम् २७ माभैष्टेत्यभयारावौशा
लहस्तौतरस्विनौ आसेदतुस्तंतरसात्वरितंगुह्यकाधमम् २८ सवीक्ष्यतावनुप्राप्तौकालमृत्युइवोद्विजन् विसृज्यस्त्रीजनंमूढःप्राद्रव
ज्जीवितेच्छया २९ तमन्वधावद्गोविन्दोयत्रयत्रसधावति जिहीर्षुस्तच्छिरोरत्नंतस्थौरक्षन्स्त्रियोबलः ३० अविदूरइवाभ्येत्यशि
रस्तस्यदुरात्मनः जहारमुष्टिनैवाङ्गसहचूडामणिंविभुः ३१ शङ्खचूडंनिहत्यैवंमणिमादायभास्वरम् अग्रजायाददात्प्रीत्यापश्य
न्तीनांचयोषिताम् ३२ इतिश्रीभागवतेमहापुराणेदशमस्कन्धेशङ्खचूडवधोनामचतुस्त्रिंशत्तमोऽध्यायः ३४

तौ मनःश्रवणयोर्मङ्गलंयथाभवतितथा जगतुः अगायतामिति २३ मूर्च्छितास्तद्गीतलीनचित्ताः स्रंसत् भ्रश्यत् दुकूलं यस्मात्तमात्मानं देहम्
स्रस्ताः केशेभ्यः स्रजोयस्यतंच ततोनाविदन् २४ २५ निरीक्षतो निरीक्षमाणयोः तौनाथौयस्यतम् प्रमदाजनं कालयामास २६
दस्युनाव्याघ्रेण २७ माभैष्ट भयंमाभुतेत्यभयवाचौ २८ २९ ३० शिरसासहचूडामणिंजहारेत्यर्थः ३१ ३२ इति
दशमेटीकायांचतुस्त्रिंशोऽध्यायः ३४ ५२ ५५ ५७ ५२ ६५

३ नकेवलमेतावत् किंतु सर्वोऽप्ययमपवस्त्वद्वपवभूतएवेति यदन्नैवंसत्यपिमपचस्यषड्जन्मादयोविकारास्त्वयिनयमज्जाते तस्यत्वयिकल्पितत्वादित्याह त्व
यीति अव्ययात्मन्पुरुषेपूर्णेऽपिउदय सञ्जिहते प्रचलंति हे अव्ययात्मन् इतिवा कथंभूतेत्वयि मनोमयेमनःप्रधानेमनोवृत्तिव्यग्रे दृश्यते न्वग्रपाणुश्यामनसै
वानुभवव्यमित्यादिश्रुते जलेयथाजलौकसः सूक्ष्माण्यद्ययाय यथाचउडुंबरात केसंवेषुमशकाः परस्परवार्त्तानभिज्ञाएवमनन्तानिब्रह्माण्डानित्वयिसंच
रंतीत्यर्थः १५ तस्मादेवंभूतत्वत्स्वरूपंदुरवगाहमिति त्वदवतारकथाऽमृतमेवसतः सेव्यत इत्याह यानियानीति आमृष्टापरिमार्जिताशुक्दुःखायेषांते १६ अतः
स्वयमप्यवतारान्नमस्यति नमइति हयशीर्ष्णे हयग्रीवाय मधुकैटभयोर्मृत्यवेहन्त्रे १७ अकूपाराय कूर्माय क्षित्युद्धारोविहारोयस्यतस्मै १८ १९ भृगूणां

त्वय्यव्ययात्मन्पुरुषेप्रकल्पितालोकाः सपालाबहुजीवसंकुलाः यथाजलेसंजिहतेजलौकसोऽप्युदुंबरेवामशकामनोमये १५ या
नियानीहरूपाणिक्रीडनार्थंबिभर्षिहि तैरामृष्टशुचोलोकामुदागायंतितेयशः १६ नमः कारणमत्स्याय प्रलयाब्धिचरायच
हयशीर्ष्णेनमस्तुभ्यंमधुकैटभमृत्यवे १७ अकूपारायबृहतेनमोमंदरधारिणे क्षित्युद्धारविहारायनमः सूकरमूर्त्तये १८ नमस्तेऽ
द्भुतसिंहायसाधुलोकभयापह वामनायनमस्तुभ्यंक्रांतत्रिभुवनायच १९ नमोभृगूणांपतयेदृप्तक्षत्रवनच्छिदे नमस्तेरघुवर्याय
रावणांतकरायच २० नमस्तेवासुदेवायनमः संकर्षणायच प्रद्युम्नायानिरुद्धायसात्वतांपतयेनमः २१ नमोबुद्धायशुद्धाय
दैत्यदानवमोहिने म्लेच्छप्रायक्षत्रहंत्रेनमस्तेकल्किरूपिणे २२ भगवन्जीवलोकोऽयंमोहितस्तवमायया अहंममेत्यस
द्ग्राहोभ्राम्यतेकर्मवर्त्मसु २३ अहंचात्मात्मजागारदारार्थस्वजनादिषु भ्रमामिस्वप्नकल्पेषुमूढःसत्यधियाविभो २४ अनि
त्यानात्मदुःखेषुविपर्ययमतिर्ह्यहम् द्वंद्वारामस्तमोविष्टोनजानेत्वात्मनःप्रियम् २५ यथाऽबुधोजलंहित्वाप्रतिच्छन्नंतदुद्भवैः
अभ्येतिमृगतृष्णांवैतद्वत्त्वाऽहंपराङ्मुखः २६ नोत्सहेऽहंकृपणधीः कामकर्महतंमनः रोद्धुंप्रमाथिभिश्चाक्षैर्ह्रियमाणमितस्ततः
२७

पतयेपरशुरामाय २० संकर्षणयमम् चतुर्व्यूहरूपेणप्रणमति नमस्तेवासुदेवायेति २१ २२ एवंस्तुत्वाबंधमोक्षमप्रार्थयितुमाह भगवन्निति असतिदेहा
दावाह आग्रहोयस्यसः असद्ग्राहोमहाग्रहोयस्येतिवा २३ नकेवलमयंलोकः अहमपितथैवेत्याह अहंचेति २४ मूढत्वमेवप्रकटयति विपर्ययमतिरिति अनि
त्येकर्मफलेनित्यमितिअनात्मनिदेहेआत्मेति दुःखरूपेगृहादौसुखमितिविपरीतमतिरित्यर्थः द्वंद्वेषुसुखदुःखादिषुआरमतेक्रीडतीतितथाभूतः ननुदुःखेकु
तोरतिस्तत्राह तमोविष्टः तमसाव्याप्तः आत्मनःप्रियंप्रेमास्पदंत्वांनजानइत्यर्थः २५ तदेवसदृष्टांतमाह यथेति तस्माज्जलादुद्भवानितृणानितैस्तथामाया
छन्नत्वात्त्वामहंहित्वापराङ्मुखोदेहाभिमुखोवर्त्तइति २६ नन्वेवंजानतःकुतोविषयाभिमुखतातत्राह नोत्सहइति कृपणावासनायुक्ताधीर्यस्यस
मतोऽप्यकामकर्मभ्याहतंक्षुभितमिंद्रियैश्चचालितं विषयसंयुक्तंसंनिरुध्यमाणमनोरोद्धुंनियमयितुंनशक्नोमीति २७ ६९ ६९

तदेवमस्यतत्रोय: सोऽहंतवांघ्रिमुपगतः शरणंप्राप्तः नन्विंद्रियपरतंत्रस्यैतदपिकुतः तत्राह तच्चापीतिहेईश अंतर्यामिन् त्वदंघ्र्युपगमनंचासतांदुरापंअतोभव तोऽनुग्रहएवेत्यहंमन्ये अनुग्रहेसतीतिवा ननुसतांसेवयाइदंभवतीतिकिंमदनुग्रहेणेत्यतआह पुंसइति जीवस्यसंसारस्यापवर्गः समाप्तिर्यदात्वत्कृपयाभवे त्सभावनास्यदंभवति हेअब्जनाभतदासदुपासनासंपद्यते तयैवत्वयिमतिर्भवेत् त्वत्कृपांविनानसत्सेवानस्कृतरांत्वन्मतिः नतमांमुक्तिरित्यर्थः २८ पादयोः पतन्प्रार्थयते नमइतिद्वयेन विज्ञानमेवमात्रामूर्त्तिर्यस्यतस्मै अतएवसर्वप्रत्ययहेतवेसमस्तज्ञानकारणाय किंच पुरुषस्य येईशाःसुखदुःखादिप्रापकाः कालकर्मस्वभावादयस्तेषांप्रधानाय नियंत्रे कुतः ब्रह्मणेपरिपूर्णाय किंच अनंतशक्तये अनंताःशक्तयो यस्य यद्वा अनंतामायाख्याशक्तिर्यस्यतस्मै अथ वाप्रधानंप्रकृतिःपुरुषस्तत्प्रवर्तकः ईशःकालः एतत्त्रितयात्मनेब्रह्मणे वक्ष्यतिचभगवान् प्रकृतिर्ह्यस्योपादानमाधारःपुरुषःपरःसतोऽभिव्यंजकः

**सोऽहंतवांघ्र्युपगतोऽस्म्यसतांदुरापंतच्चाप्यहंभवदनुग्रहईशमन्ये पुंसोभवेद्यर्हिसंसरणापवर्गस्त्वय्यब्जनाभसदुपासनयामतिःस्यात् २८ नमोविज्ञानमात्रायसर्वप्रत्ययहेतवे पुरुषेशप्रधानायब्रह्मणेऽनंतशक्तये २९ नमस्तेवासुदेवायसर्वभूतक्षयायच हृषीकेशनमस्तुभ्यंप्रपन्नंपाहिमांप्रभो ३० इतिश्रीभाग०महा०दशमस्कंधेअक्रूरस्तुतिर्नामचत्वारिंशत्तमोऽध्यायः ४० श्रीशुकउवाच स्तुवतस्तस्यभगवान्दर्शयित्वाजलेवपुः भूयःसमाहरत्कृष्णोनटोनाट्यमिवात्मनः १ सोऽपिचांतर्हितंवीक्ष्यजलादुन्मज्ज्यसत्वरः कृत्वाचावश्यकंसर्वंविस्मितोरथमागमत् २ तमपृच्छद्धृषीकेशःकिंतेदृष्टमिवाद्भुतम् भूमौवियतितोयेवातथात्वांलक्षयामहे ३ अक्रूरउवाच अद्भुतानीहयावंतिभूमौवियतिवाजले त्वयिविश्वात्मकेतानिकिंमेऽदृष्टंविपश्यतः ४ यत्राद्भुतानिसर्वाणिभूमौवियतिवाजले तंत्वाऽनुपश्यतोब्रह्मन्किंमेदृष्टमिवाद्भुतम् ५ इत्युक्त्वाचोदयामासस्यंदनंगांदिनीसुतः मथुरामनयद्रामंकृष्णंचैवदिनात्यये ६**

कालोब्रह्मतत्त्रितयंत्वहमिति २९ सर्वप्रत्ययहेतुत्वमभिव्यंजयंस्तौति नमस्तइति वासुदेवायाधिष्ठात्रे सर्वभूतक्षयाय क्षयः आश्रयः अहंकारश्चप्राणिनामाश्रयः ततश्चाहंकाराधिष्ठात्रे संकर्षणायेत्यर्थः हृषीकेशेति बुद्धिमनसोरधिष्ठात्रोः प्रद्युम्नानिरुद्धयोरेकीकृत्यग्रहणम् शरणागतंमांपाहीतिप्रार्थना ३० इतिदशमेटीकायांचत्वारिंशोऽध्यायः ४० एकचत्वारिंशकेऽथैरजकंप्रविशंपुरीम् ततोवरानदात्तुष्टःसुदाम्नोवायकस्यच १ सशाकमक्रूरमनःप्रबोध्यस्वधामसंदर्शनसत्कृपातः स्वराजधानींमथुरामपश्यदलंकृतानंतमहोत्सवाढ्याम् २ १ २ ३ भूमौवियतिजलेवायावंतिअद्भुतानितानित्वय्येवसंति तंचत्वांपश्यतोमेकिमद्भुतमदृष्टम् अपितुसर्वंदृष्टमित्यर्थः ४ ननुमत्प्राप्तेःपूर्वमेवत्वंविस्मितमुखोलक्षितोऽसि अतोभूमौवियतिजलेवाकिमप्यद्भुतंदृष्टमेवेतिचेदतआह यत्राद्भुतानीति यत्रत्वयिसर्वाण्यद्भुतानिसंति तंत्वामिहपश्यतोमेअन्यत्रभूम्यादौकिमद्भुतंदृष्टम् त्वांविनानतत्रकिंचिदद्भुतमित्यर्थः ब्रह्मन् हेपरमेश्वरेत्यर्थः ब्रह्मेतिवापाठः ५ गांदिनीसुतोऽक्रूरः ६ ६

पु. नकेवलमेतावत् किंतु सर्वोऽप्ययंप्रपञ्चस्त्वदेवपरस्तुतएवेति यदन्नैवमत्यापिप्रपञ्चस्यषड्जन्मादयोविकारास्त्वयिनप्रसज्जन्ते तस्यत्वयिकल्पितत्वादित्याह त्व
यीति अव्ययात्मन्पुरुषेपूर्णेलोकास्सञ्जिहते प्रचलन्ति हे अव्ययात्मन् इतिवा कथंभूतेत्वयि मनोमयेमनःप्रधानेमनोवृत्तिष्वग्रेदृश्यते त्वग्र्ययाबुद्ध्यासूक्ष्मसी
क्ष्मदर्शिभिरित्यादिश्रुतेः जलेयथाजलौकसः सूक्ष्ममत्स्यादयःयथावा मशकाश्चउदुम्बरान्तःकेसरेषुभ्रमन्तः परस्परवार्त्तानभिज्ञाएवमनन्तानिब्रह्माण्डानित्वयिप्रव
र्त्तन्तइत्यर्थः १५ तस्मादेवम्भूततवस्वरूपंदुरवगाहमिति त्वदवतारकथाऽमृतमेवसत्सेवन्तइत्याह यान्यपानीति आस्वाद्यपरित्यक्तानित्युक्तेपीते १६ अतः
स्वयमप्यवतारान्नमस्यति नमइति हयशीर्ष्णोहयग्रीवायमधुकैटभयोर्मृत्यवेहन्त्रे १७ अकूपारायकूर्मायक्षितेरुद्धारोविहारोयस्यतस्मै १८ १९ घृणा

त्वय्यव्ययात्मन्पुरुषेप्रकल्पितालोकाः सपालाबहुजीवसङ्कुला यथाजलेसञ्जिहतेजलौकसोऽप्युदुम्बरेवामशकामनोमये १५ या
निपानीहरूपाणिनकानिस्वार्थविभाषितैः तेरामृतंशम्बोलोकामुदागायतितेयशः १६ नमः कारणमत्स्यायप्रलयाब्धिचरायच
हयशीर्ष्णेनमस्तुभ्यंमधुकैटभमृत्यवे १७ अकूपारायबृहतेनमोमन्दरधारिणे क्षित्युद्धारविहारायनमः सूकरमूर्तये १८ नमस्तेऽ
द्भुतसिंहायसाधुलोकभयापह वामनायनमस्तुभ्यं क्रान्तत्रिभुवनायच १९ नमोभृगूणांपतयेदृप्तक्षत्रवनच्छिदे नमस्तेरघुवर्याय
रावणान्तकरायच २० नमस्तेवासुदेवायनमः संकर्षणायच प्रद्युम्नायानिरुद्धायसात्वतांपतयेनमः २१ नमोबुद्धायशुद्धाय
दैत्यदानवमोहिने म्लेच्छप्रायक्षत्रहन्त्रेनमस्तेकल्किरूपिणे २२ भगवन्जीवलोकोऽयंमोहितस्तवमायया अहंममेत्यस
द्ग्राहोभ्राम्यतेकर्मवर्त्मसु २३ अहंचात्मात्मजागारदारार्थस्वजनादिषु भ्रमामिस्वप्नकल्पेषुमूढसत्यधियाविभो २४ अनि
त्यानात्मदुःखेषुविपर्ययमतिर्ह्यहम् द्वन्द्वारामस्तमोविष्टोनजानेत्वात्मनःप्रियम् २५ यथाऽबुधोजलंहित्वाप्रतिच्छन्नंतदुद्भवैः
अभ्येतिमृगतृष्णांवैतद्वत्त्वाऽहंपराङ्मुखः २६ नोत्सहेऽहंकृपणधीः कामकर्महतंमनः रोद्धुंप्रमाथिभिश्चाक्षैर्ह्रियमाणमितस्ततः
२७

पतयेपरमपुरुषाय २० संकर्षणरामम् चतुर्व्यूहरूपेणप्रणमति नमस्तेवासुदेवायेति २१ २२ एवंस्तुत्वावधमोक्षंप्रार्थयितुमाह भगवन्निति असतिदेहा
दौग्राहः आग्रहोयस्यसः असद्ग्राहोमहोपस्येतिवा २३ नकेवलमयंलोकः अहमपितथैवेत्याह अहंचेति २४ मूढत्वमेवप्रकटयति विपर्ययमतिरिति अनि
त्येकर्मफलेनित्यमितिअनात्मनिदेहेआत्मेतिदुःखरूपेगृहादौसुखमितिविपरीतमतिरित्यर्थः द्वन्द्वेषुसुखदुःखादिषुआरमतेक्रीडतीतितथासः ननुदुःखेकु
तोरतिस्तत्राह तमोविष्टः तमसाव्याप्तः आत्मनः प्रियंप्रेमास्पदंत्वांनजानइत्यर्थः २५ तदेवसदृष्टान्तमाह यथेति तस्माज्जलादुद्भवानितृणानितैस्तथा माया
छन्नत्वात्त्वामहंहित्वापराङ्मुखोदेहाभिमुखोवर्त्तइति २६ नन्वेवंजानतः कुतोविषयाभिमुखतातत्राह नोत्सहइति कृपणावासनायुक्ताधीर्यस्यसः
अतएवकामकर्मभ्याहतस्तम्भितमिन्द्रियैश्चपालैरपि विषयसंयुक्तैरितस्ततआकृष्यमाणंमनोरोद्धुंनियमयितुंनशक्नोमीति २७

तदेवमस्यतत्त्वोयः सोऽहंतवांघ्रिमुपगतः शरणंप्राप्तः नन्विंद्रियपरतंत्रस्यैतदपिकुतः तत्राह तच्चापीतिहेईश अंतर्यामिन् त्वदभ्युपगमनंचासतांदुरापंअतोभव-
तोऽनुग्रहएवेत्यहंमन्ये अनुग्रहेसतीतिवा ननुसतांसेवयाइदंभवतीतिकिंमदनुग्रहेणेत्यतआह पुंसइति जीवस्यसंसारस्यापवर्गः समाप्तिर्यदात्वत्कृपयाभवे
त्संभावनास्यद्भवति हेअब्जनाभतदासदुपासनासंपद्यते तथैवत्वयिमतिर्भवेत् त्वत्कृपाविनानसत्सेवानसुतरांत्वन्मतिः नतमांमुक्तिरित्यर्थः २८ पादयोः
पतन्प्रार्थयते नमइतिद्वयेन विज्ञानमेवमात्रामूर्तिर्यस्यतस्मै अतएवसर्वप्रत्ययहेतवेसमस्तज्ञानकारणाय किंच पुरुषस्य येईशाःसुखदुःखादिप्रापकाः
कालकर्मस्वभावादयस्तेषांप्रधानाय नियंत्रे कुतःब्रह्मणेपरिपूर्णाय किंच अनंतशक्तये अनंताःशक्तयो यस्य यद्वा अनंतामायाख्याशक्तिर्यस्यतस्मै अथ
वाप्रधानंप्रकृतिःपुरुषस्तत्प्रवर्तकः ईशःकालः एतत्त्रितयात्मनेब्रह्मणे वक्ष्यतिचभगवान् प्रकृतिर्ह्यस्योपादानमाधारःपुरुषःपरःसतोऽभिव्यंजकः

सोऽहंतवांघ्र्युपगतोऽस्म्यसतांदुरापंतच्चाप्यहंभवदनुग्रहईशमन्ये पुंसोभवेद्यर्हिसंसरणापवर्गस्त्वय्यब्जनाभसदुपासनयाम-
तिःस्यात् २८ नमोविज्ञानमात्रायसर्वप्रत्ययहेतवे पुरुषेशप्रधानायब्रह्मणेऽनंतशक्तये २९ नमस्तेवासुदेवायसर्वभूतक्षयाय
च हृषीकेशनमस्तुभ्यंप्रपन्नंपाहिमांप्रभो ३० इतिश्रीभाग०महा०दशमस्कंधेअक्रूरस्तुतिर्नामचत्वारिंशत्तमोऽध्यायः
४० श्रीशुकउवाच स्तुवतस्तस्यभगवान्दर्शयित्वाजलेवपुः भूयःसमाहरत्कृष्णोनटोनाट्यमिवात्मनः १ सोऽपि
चांतर्हितंवीक्ष्यजलादुन्मज्ज्यसत्वरः कृत्वाचावश्यकंसर्वंविस्मितोरथमागमत् २ तमपृच्छद्धृषीकेशःकिंतेदृष्टमिवाद्भुतम्
भूमौवियतितोयेवातथात्वांलक्षयामहे ३ अक्रूरउवाच अद्भुतानीहयावंतिभूमौवियतिवाजले त्वयिविश्वात्मकेतानिकिं
मेऽदृष्टंविपश्यतः ४ यत्राद्भुतानिसर्वाणिभूमौवियतिवाजले तंत्वाऽनुपश्यतोब्रह्मन्किंमेदृष्टमिवाद्भुतम् ५ इत्युक्त्वाचोदया
मासस्यंदनंगांदिनीसुतः मथुरामनयद्रामंकृष्णंचैवदिनात्यये ६

कालोब्रह्मतत्त्रितयंत्वहमिति २९ सर्वप्रत्ययहेतुत्वमभिव्यंजयंस्तौति नम
स्तइति वासुदेवायाधिष्ठात्रे सर्वभूतक्षयाय क्षयः आश्रयः अहंकारश्चप्राणिनामाश्रयः ततश्चाहंकाराधिष्ठात्रेसंकर्षणायेत्यर्थः हृषीकेशेति बुद्धिमनसोर
धिष्ठात्रोः प्रद्युम्नानिरुद्धयोरेकीकृत्यग्रहणम् शरणागतंमांपाहीतिप्रार्थना ३० इतिदशमेटीकायांचत्वारिंशोऽध्यायः ४० एकचत्वारिंशकेऽथैर
जकंप्रविश्यपुरीम् ततोवरानदात्तुष्टःसुदाम्नोवायकस्यच १ सशंकमक्रूरमनःप्रबोध्यस्वधामसंदर्शनसत्कृपातः स्वराजधानींमथुरामपश्यदलंकृता
नंतमहोत्सवाढ्याम् २ १ प २ ३ भूमौवियतिजलेवायावंतिअद्भुतानितानित्वय्येवसंति तंचत्वांपश्यतोमेकिमद्भुतमदृष्टम् अपितुसर्वंदृष्टमित्यर्थः ४ ननु
मत्प्राप्तेःपूर्वमेवत्वंविस्मितमुखोल्लक्षितोऽसि अतोभूमौवियतिजलेवाकिमप्यद्भुतंदृष्टमेवेतिचेदतआह यत्राद्भुतानीति यत्रत्वयिसर्वाण्यद्भुतानिसंति तंत्वामिह
पश्यतोमे अन्यत्रभूम्यादौकिमद्भुतंदृष्टम् त्वांविनानतत्रकिंचिदद्भुतमित्यर्थः ब्रह्मन्हेपरमेश्वरेत्यर्थः ब्रह्मेतिवापाठः ५ गांदिनीसुतोऽक्रूरः ६ ७

दृष्टिंनाददुःपरस्परतएवस्थिताइत्यर्थः ७ रामकृष्णागमनंप्रतीक्षमाणाः स्थिताइत्यर्थः ८ प्रश्रितंविनीतम् ९ सयानःसहप्रविशताम् अवमुच्यउत्तार्यविश्रम्येत्यर्थः १० ११ साग्रजःसहगोपालैरित्यर्थः १२ यच्छौचेनयस्यपादरजसःक्षालनोदकेनगृहाङ्गणस्थितेन १३ श्लोक्यः पुण्यकीर्तिः एकान्तभक्तानांया गतिस्तांचलेभे १४ अपुनन् पवित्रितवत्यः याभिरद्भिःस्वःस्वर्गंयाताः १५ प्रार्थयमानोनमस्करोति देवदेवेति अतः परमन्यत् श्रेयोनास्तीतिमत्वाबहुधासं बोधयति १६ आर्येणबलदेवेनसहितः यदुचक्रध्रुक् तंकंसंहत्वासुहृद्भ्यःप्रियंवितरिष्ये दास्यामि १७ रामकृष्णावानीताविति स्वकृतंकर्मावेद्य

मार्गेग्रामजनाराजंस्तत्रतत्रोपसंगताः वसुदेवसुतौवीक्ष्यप्रीतादृष्टिंनचाददुः ७ तावद्व्रजौकसस्तत्रनन्दगोपादयोऽग्रतः पुरोपवनमासाद्यप्रतीक्षन्तोऽवतस्थिरे ८ तान्समेत्याहभगवानक्रूरंजगदीश्वरः गृहीत्वापाणिनापाणिंप्रश्रितंप्रहसन्निव ९ भवान्प्रविशतामग्रेसहयानः पुरींगृहम् वयंत्विहावमुच्याथततोद्रक्ष्यामहेपुरीम् १० अक्रूरउवाच नाहंभवद्भ्यांरहितःप्रवेक्ष्ये मथुरांप्रभो त्यक्तुंनार्हसिमांनाथभक्तंतेभक्तवत्सल ११ आगच्छयामगेहान्नःसनाथान्कुर्वधोक्षज सहाग्रजःसगोपालैः सुहृद्भिश्चसुहृत्तम १२ पुनीहिपादरजसागृहान्नोगृहमेधिनाम् यच्छौचेनानुतृप्यन्तिपितरःसाग्नयःसुराः १३ अवनिज्याङ्घ्रियुगलमासीत्श्लोक्योबलिर्महान् ऐश्वर्यमतुलंलेभेगतिंचैकान्तिनांतुया १४ आपस्तेऽङ्घ्र्यवनेजन्यस्त्रींल्लोकान्शुचयोऽपुनन् शिरसाधत्तयाःशर्वःस्वर्याताःसगरात्मजाः १५ देवदेवजगन्नाथपुण्यश्रवणकीर्तन यदूत्तमोत्तमश्लोकनारायणनमोऽस्तुते १६
श्रीभगवानुवाच आयास्येभवतोगेहमहमार्यसमन्वितः यदुचक्रद्रुहंहत्वावितरिष्येसुहृत्प्रियम् १७ एवमुक्तोभगवतासोऽक्रूरोविमनाइव पुरींप्रविष्टःकंसायकर्मावेद्यगृहंययौ १८ अथापराह्णेभगवान्कृष्णःसङ्कर्षणान्वितः मथुरांप्राविशद्गोपैर्दिदृक्षुःपरिवारितः १९ ददर्शतांस्फाटिकतुङ्गगोपुरद्वारांबृहद्धेमकपाटतोरणाम् ताम्रारकोष्ठांपरिखादुरासदामुद्यानरम्योपवनोपशोभिताम् २० सौवर्णशृङ्गाटकहर्म्यनिष्कुटैः श्रेणीसभाभिर्भवनैरुपस्कृताम् वैदूर्यवज्रामलनीलविद्रुमैर्मुक्ताहरिद्भिर्वलभीषुवेदिषु २१

समर्प्येति १८ गोपैःपरिवारितःप्राविशत् १९ श्रीकृष्णदृष्टांपुरीमनुवर्णयतिचतुर्भिः ददर्शेति स्फाटिकानितुङ्गानिगोपुराणिपुरद्वाराणिगृहद्वाराणिच यस्यांताम् बृहन्तिहेममयानिकपाटानितोरणानिचयस्यांताम् ताम्रंचआरं आरकूटंताभ्यांनिर्मिताः कोष्ठाधान्यागाराश्वशालादयोयस्यांताम् परिखा परितःखातं तमर्ता ताभिःदुरासदांदुर्गमाम् उद्यानानिदूरस्थानिवनानिरम्याणिउपवनानिचनिकटानितैरुपशोभिताम् २० सौवर्णाः शृङ्गाटकाश्चतुष्पथाः हर्म्याणिधनिनां गृहाणिच निष्कुटागृहोद्यानानिआरामाश्चतैः श्रेणीनामेकरूपशिल्पोपजीविनांसभाभिःउपवेशस्थानैरन्यैश्चभवनैः गृहैरुपस्कृतामलङ्कृताम् अमलाःस्फटिकाः हरितः मरकताः वैदूर्यादिभिर्जुष्टेषुवलभ्यादिषुआविटङ्के उपविटङ्के पारावतैर्वर्द्धिभिश्चनादिताम् तत्रवलभ्यः गृहपुरोभागेपुरतःकृताः रुचकाः दलानिवेश्यानरूपाणामधोदेशेविरचि ता अवष्टम्भवेदिका २१

जालामुखरंध्राणिगवाक्षच्छिद्राणि कुट्टिमानिमणिबद्धाभूमयः तेष्विति रथ्याराजमार्गाः आपणाःपण्यवीथयः मार्गाअन्येच चत्वराणिअंगणानिसंसिक्ता नि रथ्यादीनियस्यांताम् प्रकीर्णामाल्यादयोयस्यांताम् २२ तथास्वलंकृतानिद्वाराणियेषांतेगृहायस्यांताम् कैः आपूर्णैःकुंभैर्दध्नाचंदनेनचउक्षितैःसिक्तैःप्र सूनानांदीपानांचावलयोयेषुतैः वृतैःफलगुच्छैःउपलक्षितारंभाः क्रमुकाश्चतत्सहितैःसकेतुभिः केतवोध्वजास्तत्सहितैःपट्टिकावितस्तिविस्तारपट्टवस्त्राणि तत्सहितैः तत्रैयंरीतिः द्वारेषुभूयतस्तंडुलानामुपरिकुंभास्तत्परितःप्रसूनावलयःकंठेपट्टिकामुखेचूतादिपल्लवाःतदुपरिपात्रांतरेदीपावलयःतत्संनिधौरंभाः क्रमुकाःकेतवस्तोरणानिचेति २३ नरदेवानांवर्त्मनाराजमार्गेणतांपुरींसंप्रविष्टौइतिद्वितीयांतम् २४ औत्सुक्यमेवाहद्वयेन काश्चिदिति विपर्ययविप रीतंधृतानिवस्त्राणिभूषणानिचयाभिस्ताः युगलेषुधार्येषुकुंडलकंकणादिषुएकंविस्मृत्यसमीयुः कृतमेकमेवपत्रंययोस्तेश्रवणेयासाम् एकमेवनूपुरंच

जुष्टेषुजालामुखरंध्रकुट्टिमेष्वाविष्टपारावतबर्हिनादिताम् संसिक्तरथ्यापणमार्गचत्वरांप्रकीर्णमाल्यांकुरलाजतंडुलाम् २२ आ पूर्णकुंभैर्दधिचंदनोक्षितैःप्रसूनदीपावलिभिःसपल्लवैः संवृतरंभाक्रमुकैःसकेतुभिःस्वलंकृतद्वारगृहांसपट्टिकैः २३ तांसंप्रविष्टौव सुदेवनंदनौवृतौवयस्यैर्नरदेववर्त्मना द्रष्टुंसमीयुस्त्वरिताःपुरस्त्रियोहर्म्याणिचैवारुरुहुर्नृपोत्सुकाः २४ काश्चिद्विपर्यग्धृतवस्त्रभू षणाविस्मृत्यचैकंयुगलेष्वथापराः कृतैकपत्रश्रवणैकनूपुरानांक्त्वाद्वितीयंत्वपराश्चलोचनम् २५ अश्नंत्यएकास्तदपास्यसोत्सवाअ भ्यज्यमानाअकृतोपमज्जनाः स्वपंत्यउत्थायनिशम्यनिःस्वनंप्रपाययंत्योऽर्भमपोह्यमातरः २६ मनांसितासामरविंदलोचनःप्रगल्भ लीलाहसितावलोकनैः जहारमत्तद्विरदेंद्रविक्रमोदृशांददच्छ्रीरमणात्मनोत्सवम् २७ दृष्ट्वामुहुःश्रुतमनुद्रुतचेतसस्तंतत्प्रेक्षणोत् स्मितसुधोक्षणलब्धमानाः आनंदमूर्तिमुपगुह्यदृशात्मलब्धंहृष्यत्त्वचोजहुरनंतमरिंदमाधिम् २८ प्रासादशिखरारूढाःप्रीत्यु त्फुल्लमुखांबुजाः अभ्यवर्षन्सौमनस्यैःप्रमदाबलकेशवौ २९ दध्यक्षतैःसोदपात्रैःस्रग्गंधैरभ्युपायनैः तावानर्चुःप्रमुदितास्तत्र तत्रद्विजातयः ३० ऊचुःपौराअहोगोप्यस्तपःकिमचरन्महत् याह्येतावनुपश्यंतिनरलोकमहोत्सवौ ३१ रजकंकंचिदायांतंरंगकारं गदाग्रजः दृष्ट्वाऽयाचतवासांसिधौतान्यत्युत्तमानिच ३२

रणाभरणंयासांताश्चताश्च नांक्त्वाअनंक्त्वा एकस्मिन्नेवलोचनेअंजनंनिधायेत्य र्थः २५ तद्भोजनंत्यक्त्वा अभ्यज्यमानाःसखीभिः क्रियमाणतैलाभ्यंगाःअकृतस्नानाः अपोह्यनिरस्य २६ प्रगल्भायाःलीलास्ताभिर्हसितानिनिरीक्षिता निचतैः श्रियंरमयतीतिश्रीरमणःतेनात्मनावपुषातासांदृशामुत्सवंददन्मनांसिजहार २७ मुहुःश्रुतत्वाद्द्रुतचेतसःसद्यस्तंदृष्ट्वातस्यप्रेक्षणंचोत्स्मितंचत देवसुधातयाउक्षणंसेचनंतेनलब्धोमानोयाभिस्ताः दृशाउद्घाटितेननेत्रद्वारेणात्मनिमनसिलब्धंप्राप्तंपरिष्वज्यतदप्राप्तिजनितमनंतमाधिंव्यथांजहुः हे अरिंदमनिर्जितकामेतिसंबोधनंशृंगाररसेनिमग्नोमाभूरिति २८ सौमनस्यैःशोभनकुसुमसमूहैःशोभनमनोभावैर्वा २९ ३० पौराःपुरस्त्रियः ३१ रजकोवस्त्रनिर्णेजकःसएववस्त्राणांरंगमपिकुर्वन् रंगकारः ३२ ५ ५ ५ ५ ५

३३ रुषित कुपित ३४ हेउद्धत गिरीवनेचरयनित्यतयूयपरिधत्तेतिसंभावनायालोट् अभीप्सित मार्थयध्वम् ३५ राजकुलानिराजकोशा लुपतिनि स्वकुर्वीति ३६ ग्रस्‍ कोशान्वस्त्रपुटकान् ३८ ३९ वायक ततुवायविशेष वेषमलंकारम् चैलेयैर्वस्त्रमयैराकल्पैर्भूषणे ४० पर्वणिउत्सवे ४१ इहलोके परमांश्रियचबलंचऐश्वर्यंचस्मृतिचइंद्रियचनतसारूप्यम् ४२ ४३ ४४ ४५ क्षेमाय अभयाय भवायउद्भवाय ४६ रजकवधेनवायकानुग्रहेणचयुवयो

देत्यावया समुचितान्यगथासासिचार्हतो भविष्यातिपरश्रेयोदातुस्तेनात्रसंशय ३३ सयाचितोभगवतापरिपूर्णेनसर्वत सास्के परुषित प्राहभृत्योराज्ञ सुदुर्मद ३४ ईदृशान्येववासांसिनित्यगिरिवनेचरा परिधत्तकिमुद्धताराजद्रव्याण्यभीप्सत ३५ याताशुबालिशामैवंप्रार्थ्यंयदिजिजीविषा बध्नातिघ्नतिलुपतिदृप्तराजकुलानिहि ३६ एवंविकत्थमानस्यकुपितोदेवकीसुत रजकस्यकराग्रेणशिर कायादपातयत् ३७ तस्यानुजीविन सर्ववास कोशान्विसृज्यवै दुद्रुवु सर्वतोमार्गवासांसिजगृहे च्युतः ३८ वसित्वात्मप्रियेवस्त्रेकृष्णा संकर्षणस्तया शेषाण्यादत्तगोपेभ्योविसृज्यभुविकानिचित् ३९ ततस्तुवायक प्रीत स्तयोर्वेषमकल्पयत् विचित्रवर्णैश्चैलेयैराकल्पैरनुरूपत ४० नानालक्षणवेषाभ्यांकृष्णारामौविरेजतुः स्वलंकृतौबालगजौ पर्वणीवसितेतरौ ४१ तस्यप्रसन्नोभगवान्प्रादात्सारूप्यमात्मन श्रियचपरमांलोकेबलैश्वर्यस्मृतीन्द्रियम् ४२ तत सुदाम्नो भवनमालाकारस्यजग्मतु तौदृष्ट्वाससमुत्थायननामशिरसाभुवि ४३ तयोरासनमानीयपाद्यंचार्घ्यार्हणादिभि पूजासानुगयो श्चक्रेस्रक्ताम्बूलानुलेपनै ४४ प्राहन सार्थकजन्मपावितंचकुलंप्रभो पितृदेवर्षयोमह्यंतुष्टाह्यागमनेनवाम् ४५ भवंतो किलविश्वस्यजगत कारणपरम् अवतीर्णाविहांशेनक्षेमायचभवायच ४६ नहिवांविषमादृष्टि सुहृदोजगदात्मनो समयो सर्वभूतेषुभजतभजतोरपि ४७ तावाज्ञापयतंभृत्यंकिमहंकरवाणिवाम् पुंसोऽत्यनुग्रहोह्येषभवद्भिर्यन्नियुज्यते ४८ इत्य भिप्रेत्यराजेन्द्रसुदामाप्रीतमानस शस्तै सुगंधै कुसुमैर्मालाविरचितादद‍ौ ४९ ताभि स्वलंकृतौप्रीतौकृष्णारामौसहानुगौ प्रणतायप्रपन्नायददतुर्वरदौवरान् ५० सोऽपिवव्रेऽचलांभक्तितस्मिन्नेवाखिलात्मनि तद्भक्तेषुचसौहार्दंभूतेषुचदयांप राम् ५१ इतितस्मैवरंदत्वाश्रियंचान्वयवर्धिनीम् बलमायुर्यश कांतिनिर्जगामसहाग्रज ५२ इतिश्रीभागवतमहा पुराणेदशमस्कंधेपुरप्रवेशोनामएकचत्वारिंशोऽध्याय ४१

विषमदृष्टितयाऽनीश्वरतानाशंकनीयेत्याह नहिवामिति अत्रहेतु समयो रिति अथापिहेतुद्वयसुहृद्‍दोरितिजगदात्मनोरितिच ४७ ४८ इत्यभिप्रेत्यइत्येवंविज्ञापयन्नभिप्रेत्यतन्मतज्ञात्वा ४९ ५० ५१ अन्वयव र्द्धिनीवंशोवृद्धिमतीमित्यर्थ अप्रार्थितश्रीप्रभृतिकंचदत्वाततोनिर्जगामेति ५२ सेरचरन्मधुपुरेरजकनिकृत्यकृष्णा प्रदायचवरानथवायकाय माला कृतसमनुकम्पनकारकुब्जामृज्वीधनुश्चसहसानमयन्बभज १ इतिदीपिकायामेकचत्वारिंशोऽध्याय ४१ ५ ६

द्विचत्वारिंशके कुब्जोन्नमनं धनुषो भिदा बद्धस्तद्रक्षिणां कंसारिष्टं गोत्सवादिच १ अंगविलेपाश्चंदनादयः गृहीतान्यंगविलेपानां भाजनानि यया ताम् रसप्रदः स्मरप्रदः १ हे अंगने हे वरोरु इति सोपहासं संबोध्य पृच्छति त्वं का एतदनुलेपनं कस्य वा उह इति निपातो भ्रूविक्षेपयुक्ते वितर्के अस्मत्सेवा सद्यः फलत्येवेत्याह नचिरादिति २ तिस्रः ग्रीवोरःकट्योवक्रा इति त्रिवक्रेति नाम यस्याः सा अनुलेपसाधनक्रियायां कंसस्य बहुमता दास्यस्मि ३ रूपं च अंगसौष्ठवं पेशलं च सौकुमार्यं माधुर्यं रसिकता हसितं च आलापाश्च वीक्षितं च तैर्धर्षिता त्वामोहितचित्ता सांद्रं घनम् ४ स्ववर्णेतरशोभिना रामकृष्णयोर्वर्णाभ्यामितरः पीतादिवर्णस्तेन शोभितुं शीलं यस्य तेन संप्राप्तपरभागेन संप्राप्तः परो नाभेरुपरितनो भागो येन सः संप्राप्तः परभागः शोभाऽतिशयो येनेति वा तेनानुरंजितौ ५ स्वदर्शने

श्रीशुक उवाच अथ व्रजन्राजपथेन माधवः स्त्रियं गृहीतांगविलेपभाजनाम् विलोक्य कुब्जां युवतीं वराननां पप्रच्छ यांतीं प्रहसन्रसप्रदः १ कात्वं वरोर्वेतदु हानुलेपनं कस्यांगने वा कथयस्व साधु नः देह्यावयोरंगविलेपमुत्तमं श्रेयस्ततस्ते न चिराद्भविष्यति २ सैरंध्र्युवाच दास्यस्म्यहं सुंदर कंससंमता त्रिवक्रनामा ह्यनुलेपकर्मणि मद्भावितं भोजपतेरतिप्रियं विना युवां कोऽन्यतमस्तदर्हति ३ रूपपेशलमाधुर्यहसितालापवीक्षितैः धर्षितात्मा ददौ सांद्रमुभयोरनुलेपनम् ४ ततस्तावंगरागेण स्ववर्णेतरशोभिना संप्राप्तपरभागेन शुशुभातेऽनुरंजितौ ५ प्रसन्नो भगवान्कुब्जां त्रिवक्रां रुचिराननाम् ऋज्वीं कर्तुं मनश्चक्रे दर्शयन्दर्शने फलम् ६ पद्भ्यामाक्रम्य प्रपदे द्व्यंगुल्युत्तानपाणिना प्रगृह्य चुबुकेऽध्यात्ममुदनीनमदच्युतः ७ सा तदर्जुसमानांगी बृहच्छ्रोणिपयोधरा मुकुंदस्पर्शनात्सद्यो बभूव प्रमदोत्तमा ८ ततो रूपगुणौदार्यसंपन्ना प्राह केशवम् उत्तरीयांतमाकृष्य स्मयंती जातहृच्छया ९ एहि वीर गृहं यामो न त्वां त्यक्तुमिहोत्सहे त्वयोन्मथितचित्तायाः प्रसीद पुरुषर्षभ १० एवं स्त्रिया याच्यमानः कृष्णो रामस्य पश्यतः मुखं वीक्ष्यानुगानां च प्रहसंस्तामुवाच ह ११ एष्यामि ते गृहं सुभ्रूः पुंसामाधिविकर्शनम् साधितार्थोऽगृहाणां नः पांथानां त्वं परायणम् १२ विसृज्य माध्व्या वाण्या तां व्रजन्मार्गे वणिक्पथैः नानोपायनतांबूलस्रग्गंधैः साग्रजोऽर्चितः १३ तद्दर्शनस्मरक्षोभादात्मानं नाविदन्स्त्रियः विस्रस्तवासःकबरवलया लेख्यमूर्तयः १४ ततः पौरान्पृच्छमानो धनुषः स्थानमच्युतः तस्मिन्प्रविष्टो ददृशे धनुरैंद्रमिवाद्भुतम् १५ पुरुषैर्बहुभिर्गुप्तमर्चितं परमर्द्धिमत् वार्यमाणो नृभिः कृष्णः प्रसह्य धनुराददे १६

सद्यः फलं दर्शयन् ६ तस्याः प्रपदे पादाग्रद्वयं पद्भ्यामापीड्य द्वे अंगुल्यौ उत्ताने उन्नते यस्मिन् पाणौ तेन चुबुके मुखस्याधोभागे धृत्वाऽध्यात्मं देहमुन्नमयामास ७ तदेव ऋजु समानमंगं यस्याः बृहत्यौ श्रोणीपयोधरौ च यस्याः सा मुकुंदस्पर्शनादिति मुख्यं कारणम् ८ ९ १० ११ आधिविकर्शनं मनःपीडाशमनम् कंसवधेन साधितः अर्थः सत्प्रदां प्रयोजनं येन सः अगृहाणामकृतदाराणां पांथानां प्रवासिनां परमयनमाश्रयस्त्वम् १२ मधुरया गिरा तां प्रस्थाप्य व्रजन्वणिक्पथैः वणिग्भिरर्चितः १३ लेख्या भित्तिन्यस्ता इव मूर्तयो यासां ताः १४ धनुर्मखशालां पृच्छन् १५ प्रसह्य बलात् १६ ५२ ५२

निमिषेणातिशीघ्रम् मदकरीमत्तहस्ती १७ १८ गृह्यतांबध्यतामितिनदन्तोजिघृक्षव आवव्रुः १९ नकेवलंक्रुद्धौकिंतुधन्वनःधनुषःशकलेगृहीत्वाजघ्नतु
श्चेति २० पुरत मातरगतव्यमितिशालामुखादेवद्वारेण निष्क्रम्य २१ तेजःप्रभावंप्रागल्भ्यंधृष्टताम् २२ शकटंशकटावमोचनस्थानम् २३ मुकुंदस्यविगमेप्रस्था
निर्गमनसमयेयाआशिषःआशासत ऋतवप्रभातारजनीयम् अद्यध्रुवंतन्नरशोभाभविष्यतइत्यादियदुक्तवत्यः ता ऋता सत्या बभूवुः पुरुषभूषणस्यश्रीकृष्ण
स्याप्रभस्यदेहस्यलक्ष्मींशोभाम् कथंभूतस्यगात्रस्य नुअहोइतरान्ब्रह्मादीन्हित्वायदयनमाश्रयंश्रीः कामयामास यागात्रलक्ष्मीमितिवा २४ अवनिक्तंक्षालि
तमंघ्रियुगलंययोस्तौ क्षीरमिश्रमन्नंभुक्त्वासुखरवत्स्यसनाम् २५ परंकेवलंगोविंदरामयोर्विक्रीडितंनतुप्राक्रमःकश्चित् २६ उभयथास्वप्नजागरितभेदेनम

करेणवामेनसलीलमुद्धृतंसज्जंचकृत्वानिमिषेणपश्यताम् नृणांविकृष्यप्रबभंजमध्यतोयथेक्षुदंडंमदकर्युरुक्रम १७ धनुषोभ
ज्यमानस्यशब्दः खंरोदसीदिशः पूरयामासयंश्रुत्वाकंसस्त्रासमुपागमत् १८ तद्रक्षिणःसानुचराः कुपिताआततायिनः
ग्रहीतुकामाआवव्रुर्गृह्यतांबध्यतामिति १९ अथतान्दुरभिप्रायान्विलोक्यबलकेशवौ क्रुद्धौधन्वनआदायशकलेतांश्चजघ्
नतुः २० बलंचकंसप्रहितंहत्वाशालामुखात्ततः निष्क्रम्यचेरतुर्हृष्टौनिरीक्ष्यपुरसंपदः २१ तयोस्तदद्भुतंवीर्यंनिशाम्यपुरवासिनः
तेजःप्रागल्भ्यंरूपंचमेनिरेविबुधोत्तमौ २२ तयोर्विचरतोःस्वैरमादित्यो-स्तमुपेयिवान् कृष्णरामौवृतौगोपैःपुराच्छकटमीयतुः
२३ गोप्योमुकुंदविगमेविरहातुरायाआशासताशिषऋतामधुपुर्यभूवन् संपश्यतांपुरुषभूषणगात्रलक्ष्मींहित्वेतरान्नुभजतश्च
कमेऽयनंश्रीः २४ अवनिक्ताङ्घ्रियुगलौभुक्त्वाक्षीरोपसेचनम् ऊषतुस्तांसुखंरात्रिंज्ञात्वाकंसचिकीर्षितम् २५ कंसस्तुधनुषोभ
ङ्गरक्षिणांस्वबलस्यच वधंनिशम्यगोविंदरामविक्रीडितंपरम् २६ दीर्घप्रजागरोभीतोदुर्निमित्तानिदुर्मतिः बहून्याचष्टोभयथा
मृत्योर्दौत्यकराणिच २७ अदर्शनंस्वशिरसःप्रतिरूपेचसत्यपि असत्यपिद्वितीयेचद्वैरूप्यंज्योतिषांतथा २८ छिद्रप्रतीतिः
श्छायायांप्राणघोषानुपश्रुतिः स्वर्णप्रतीतिर्वृक्षेषुस्वपदानामदर्शनम् २९ स्वप्नेप्रेतपरिष्वंगः खरयानंविषादनम् यायान्नलदमा
ल्येकस्तैलाभ्यक्तोदिगंबरः ३० अन्यानिचेत्थंभूतानिस्वप्नजागरितानिच पश्यन्मरणसंत्रस्तोनिद्रांलेभेनचिंतया ३१

मेर्कंभूत्यदौत्यकराणिच तथाचमत्स्य इत्यादुलूकआपतत्हिरण्यगासाअयोमुखं रक्षसादूतआगतइत्यादि तथा यदेतद्भूतान्यन्नाविश्यदेवीवाचंवदसी
त्यादिश्च २७ तानिदर्शयति श्लोकद्वयेन जलादौप्रतिरूपेदृश्यमानेऽपिस्वशिरसस्तत्रादर्शनम् असत्यपिद्वितीयेचक्षुषोऽन्ते ध्वनिअंगुल्यादौज्योतिषांचन्द्रादीना
द्वित्वम् २८ छायायांप्रतिबिंबेछिद्रप्रतीतिः पिहितकर्णपुटस्ययोऽन्तः श्रूयमाणोध्वनिः प्राणघोषस्तस्याश्रवणम् वृक्षेषुस्वर्णवर्णप्रतीतिः रजःकर्दमा
दिषुस्वपदानामदर्शनम् २९ एतानिजागरितानिदुर्निमित्तानि स्वप्नान्याह स्वप्नइति प्रेतैर्मृतैः परिष्वंगः खरमारुह्ययानम् विषभक्षणम् नलदमालीज
पाकुसुममाली यायादितियत्तदप्येकदुर्निमित्तमिति ३० ३१

कष्टेनकथंचित्प्रभातायांपुनःसूर्येचान्ध्यःसमुत्थितइति तथाचश्रुतिः यउदगान्महतोऽर्णवात्विभ्राजमानः सलिलस्यमध्यात् समामृषभोलोहिताक्षःसूर्यो विपश्चिन्मनसापुनात्विति ३२ ३३ यथोपजोषंयथासुखम् ३४ ३५ मल्लतालउत्तरउपरिउच्चैःश्रूयमाणेषुतेषुतूर्येषु उपाध्यायाःमल्लाचार्याः ३६ उपस्थानंमल्लरंगम् ३७ समाहुताःसमाहूताः निवेदितान्युपायनानियैस्ते ३८ इतिदशमेटीकायांद्विचत्वारिंशोऽध्यायः४२ त्रिचत्वारिंशकेहत्वागजेंद्रंरामकृष्णयोः रंगप्रवेशसौभाग्यंचाणूरेणचभाषणम् १ पूर्वेद्युरेवकृतंशौचंशुद्धत्वंनिरपराधत्वंयाभ्यांतौ एतदुक्तंभवति धनुर्भंगादिनाआवाभ्यांनिजेश्वर्येसूचितेऽपि

व्युष्टायांनिशिकौरव्यसूर्येचान्ध्यःसमुत्थिते कारयामासवैकंसोमल्लक्रीडामहोत्सवम् ३२ आनर्चुःपुरुषारंगंतूर्यभेर्यश्चजघ्निरे मंचाश्चालंकृताःस्रग्भिःपताकाचैलतोरणैः ३३ तेषुपौराजानपदाब्रह्मक्षत्रपुरोगमाः यथोपजोषंविविशूराजानश्चकृतासनाः ३४ कंसस्तुसंवृतोमात्यैराजमंचउपाविशत् मंडलेश्वरमध्यस्थोत्हृदयेनविदूयता ३५ वाद्यमानेषुतूर्येषुमल्लतालोत्तरेषुच मल्लाःस्वलंकृताःदृप्ताःसोपाध्यायाःसमागताः ३६ चाणूरोमुष्टिकःकूटःशलस्तोशलएवच तआसेदुरुपस्थानंवल्गुवाद्यप्रहर्षिताः ३७ नंदगोपादयोगोपाभोजराजसमाहुताः निवेदितोपायनास्तेएकस्मिन्मंचआविशन् ३८ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपूर्वार्धेरंगोपवर्णननामद्विचत्वारिंशोऽध्यायः ४२ श्रीशुकउवाच अथकृष्णश्चरामश्चकृतशौचौपरंतप मल्लदुंदुभिनिर्घोषंश्रुत्वाद्रष्टुमुपेयतुः १ रंगद्वारंसमासाद्यतस्मिन्नागमवस्थितम् अपश्यत्कुवलयापीडंकृष्णोऽम्बष्ठप्रचोदितम् २ बद्ध्वापरिकरंशौरिःसमुह्यकुटिलालकान् उवाचहस्तिपंवाचामेघनादगभीरया ३ अंबष्ठांबष्ठमार्गंनौदेह्यपक्रमसाचिरम् नोचेत्सकुंजरंत्वाद्यनयामियमसादनम् ४ एवंनिर्भर्त्सितोऽम्बष्ठःकुपितःकोपितंगजम् चोदयामासकृष्णायकालांतकयमोपमम् ५ करींद्रस्तमभिद्रुत्यकरेणतरसाऽग्रहीत् कराद्विगलितःसोऽमुंनिहत्यांघ्रिष्वलीयत ६ संक्रुद्धस्तमचक्षाणोघ्राणदृष्टिःसकेशवम् परामृशत्पुष्करेणसप्रसह्यविनिर्गतः ७ पुच्छेप्रगृह्यातिबलंधनुषःपंचविंशतिम् विचकर्षयथानागंसुपर्णइवलीलया ८ सपर्यावर्तमानेनसव्यदक्षिणतोऽच्युतः बभ्रामभ्राम्यमाणेनगोवत्सेनेवबालकः ९

पितरौनमुंचति आवांचपुनर्जिघांसति अतोऽस्यमातुलस्यापिवधेनावयोर्दोषइत्येवंकृतापराधपरिहाराविति मल्लानांदुंदुभीनांचनिर्घोषंमल्लतालदुंदुभिनिर्घोषंवा १ अंबष्ठोहस्तिपस्तेनचोदितम् २ परिकरंयुद्धोचितपरिधानंकृत्वासमुह्यनिबध्य ३ ४ अंतकोमृत्युःकालस्तन्निमित्तंयमस्तन्नियंतातैरुपमायस्यतम् ५ विगलितोविच्युतःमुष्टिनानिहत्यालीयतअदृश्योबभूव ६ अचक्षाणःअपश्यन् घ्राणमवघ्राणंतेनदृष्टिर्दर्शनंयस्यसःलोचनागोचरमपिहिपशवोघ्राणेनजानंतीतिप्रसिद्धं परामृशत्धृतवान् पुष्करेणशुंडाग्रेणसःकृष्णःप्रसह्यबलेन ७ धनुषःधनुषांपंचविंशतिर्यावत्तावंतंदेशंविचकर्ष आकृष्यनीतवान् कंकइवविचकर्षयथानागंसर्पंवहंतमानंगजंसुपर्णवत्स्वयमिति आविरासीद्यथाप्राच्यांदिशींदुरिवपुष्कलइतिवत् ८ सपर्यावर्तमानेनेतिपुच्छग्राहिणंश्रीकृष्णंग्रहीतुंयदिदक्षिणतःपरिवर्ततेगजस्तर्हिसव्यतोभ्रामयति यदासव्यतःपरिवर्ततेतदादक्षिणतोभ्रामयंस्तेनसहबभ्राम गोवत्सेनभ्राम्यमाणेनबालकःसएवकृष्णोयथाऽन्योबालकइवेति ९

वारणंगजम् प्राद्रवन्प्रकर्षेणसमंततोधावन् पातयामास यथापततितथातंवञ्चयन्प्राद्रवदित्यर्थः १० किंच सधावन्निति अहनत् अहन् ११ १२ १३ १४ रंगंसमाविशत् तदावीरभिषावभौ कथंभूतः अंसेन्यस्तविषाणगजदंतोयेनसः असृजोरक्तस्यमदस्यचिदुभिः परितोऽंकितः १५ विरूढाउद्गतास्वेदकणिका ताभिरुपलक्षितवदनांबुरुहंयस्यस नकेवलंसएक समाविशन् किंतुवृतोगोपैरिति १६ मत्रशृंगारादिसर्वरसकदंबमूर्तिर्भगवांस्तत्तदभिप्रायानुसारेणबभौ नसाकल्येनसर्वेषामित्याह मल्लानामिति मल्लादीनामशनादिरूपेणामशन्यादिरूपेणदशधाविदितः सन्साग्रजोरंगंगतइत्यन्वयः मल्लादिष्वभिव्यक्ता रसाः क्रमेणश्लोकेननिबध्यंते रौद्रोऽद्भुतश्चशृंगारोहास्यवीरोदयातथा भयानकश्चबीभत्सः शांतःसप्रेमभक्तिकः अविदुषाविराट्विकल॰
,

ततोऽभिमुखमभ्येत्यपाणिनाहत्यवारणम् प्राद्रवन्पातयामासस्पृश्यमानःपदेपदे १० सधावन्क्रीडयाभूमौपतित्वासहसोत्थितः तंमत्वापतितंक्रुद्धोदंताभ्यांसोऽहनत्क्षितिम् ११ स्वविक्रमेप्रतिहतेकुंजरेंद्रोऽत्यमर्षितः चोद्यमानोमहामात्रैः कृष्णमभ्यद्रवद्रुषा १२ तमापतंतमासाद्यभगवान्मधुसूदनः निगृह्यपाणिनाहस्तंपातयामासभूतले ,१३ पतितस्यपदाक्रम्यमृगेंद्रइवलीलया दंतमुत्पाट्यतेनेभंहस्तिपांश्चाहनद्धरिः १४ मृतकंद्विपमुत्सृज्यदंतपाणिःसमाविशत् अंसन्यस्तविषाणोऽसृङ्मदबिंदुभिरंकितः १५ विरूढस्वेदकणिकावदनांबुरुहोबभौ वृतोगोपैःकतिपयैर्बलदेवजनार्दनौ रंगंविविशतूराजन्गजदंतवरायुधौ १६ मल्लानामशनिर्नृणांनरवरः स्त्रीणांस्मरोमूर्तिमान्गोपानांस्वजनोऽसतांक्षितिभुजांशास्तास्वपित्रोःशिशुः मृत्युर्भोजपतेर्विराडविदुषांतत्त्वंपरंयोगिनांवृष्णीनांपरदेवतेतिविदितोरंगंगतःसाग्रजः १७ हतंकुवलयापीडंदृष्ट्वातावपिदुर्जयौ कंसोमनस्व्यपितदाभृशमुद्विविजेनृप १८ तौरेजतूरंगगतौमहाभुजौविचित्रवेषाभरणस्रगंबरौ यथानटावुत्तमवेषधारिणौमनःक्षिपंतौप्रभयानिरीक्षताम् १९ निरीक्ष्यतावुत्तमपूरुषौजनामंचस्थितानागरराष्ट्रकानृप प्रहर्षवेगोत्कलितेक्षणाननाःपपुर्नतृप्तानयनैस्तदाननम् २० पिबंतइवचक्षुर्भ्यांलिहंतइवजिह्वया जिघ्रंतइवनासाभ्यांश्लिष्यंतइवबाहुभिः २१ ऊचुःपरस्परंतेवैयथादृष्टंयथाश्रुतम् तद्रूपगुणमाधुर्यप्रागल्भ्यस्मारिताइव २२

अपर्यासोराजतइतितथा अनेनबीभत्सरसउक्तः विकलत्वंचक्रवज्रसारसर्वांगावित्यादिना वक्ष्यते १७ उद्विविजेभीतोबभूव १८ यथानटावितिनिर्भयत्वदर्शितम् १९ प्रहर्षवेगेनउत्कलितानिउज्जृंभितानि ईक्षणानि आननानिचयेषांतेयोराननंपपुः परंनतृप्ताः निराकांक्षानबभूवुरित्यर्थः २० तदेवाह पिबंतइवेति श्लिष्यंतः परिष्वंगंकुर्वंतइवलक्षिताइत्यर्थः २१ यथादृष्टंधनुर्भंगादि यथाश्रुतंगोवर्धनोद्धरणादि तत्तदनतिक्रम्यतदनुरूपमित्यर्थः। प्रत्यक्षंचतयोरूपंगजदंतादियुक्तम् गुणाः शौर्यादयः माधुर्यंहसितालापादि प्रागल्भ्यंधार्ष्ट्यंतैःस्मारिताइवस्मरणंप्रापिताइव २२ ५ ५२ ५२ ५२ ५२ ५२

विस्मितानागरास्यान्याह अष्टभिरेताविस्यादिभिः २३ किलेतिसर्वत्रान्वयः २४ गुह्यकः शंखचूडः अन्येचाघासुरादयः २५ २६ २७ आश्रममीषद्दुःखम्
युक्तंसुखम् अश्रिमंसुखमितिवा यद्वा आश्रमंयथाभवतितथातरंतिस्मेति २८ अनेनपरिरक्षितोयदोर्वंशः सुबहुविश्रुतः सन्श्रियादिलप्स्यतइति वदंतीति २९
धेनुकबकवत्सासुरेषु विपर्ययोक्तिर्जनवादेषु निश्चयात् ३० जनेष्वेवंब्रुवाणेषु तदसहमानश्चाणूरोऽब्रवीत् ३१ ३२ ३३ ३४ हेकृष्णप्रियंकरवामेति राज्ञिप्रीतेभूतानिचप्रसी

एतौभगवतःसाक्षाद्धरेर्नारायणस्यहि अवतीर्णाविहांशेनवसुदेवस्यवेश्मनि २३ एषवैकिलदेवक्यांजातोनीतश्चगोकुलम् कालमे
तंवसन्गूढोववृधेनंदवेश्मनि २४ पूतनाऽनेननीतांऽतंचक्रवातश्चदानवः अर्जुनौगुह्यकःकेशीधेनुकोऽन्येचतद्विधाः २५ गावःस
पालाएतेनदावाग्नेःपरिमोचिताः कालियोदमितःसर्पइंद्रश्चविमदःकृतः २६ सप्ताहमेकहस्तेनधृतोऽद्रिप्रवरोऽमुना वर्षवाता
शनिभ्यश्चपरित्रातंचगोकुलम् २७ गोप्योऽस्यनित्यमुदितहसितप्रेक्षणंमुखम् पश्यंत्योविविधांस्तापांस्तरंतिस्माश्रमंमुदा २८
वदंत्यनेनवंशोऽयंयदोःसुबहुविश्रुतः श्रियंयशोमहत्त्वंचलप्स्यतेपरिरक्षितः २९ अयंचास्याग्रजःश्रीमान्रामःकमललोचनः प्रलं
बोनिहतोयेनवत्सकोयेबकादयः ३० जनेष्वेवंब्रुवाणेषुतूर्येषुनिनदत्सुच कृष्णरामौसमाभाष्यचाणूरोवाक्यमब्रवीत् ३१ हेनंदसू
नोहेरामभवंतौवीरसंमतौ नियुद्धकुशलौश्रुत्वाराज्ञाऽहूतौदिदृक्षुणा ३२ प्रियंराज्ञःप्रकुर्वत्यःश्रेयोविंदंतिवैप्रजाः मनसाकर्मणा
वाचाविपरीतमतोऽन्यथा ३३ नित्यंप्रमुदितागोपावत्सपालायथास्फुटम् वनेषुमल्लयुद्धेनक्रीडंतश्चारयंतिगाः ३४ तस्माद्राज्ञःप्रि
यंयूयंवयंचकरवामहे भूतानिनःप्रसीदंतिसर्वभूतमयोनृपः ३५ तन्निशम्याब्रवीत्कृष्णोदेशकालोचितंवचः नियुद्धमात्मनोऽ
भीष्टंमन्यमानोऽभिनंद्यच ३६ प्रजाभोजपतेरस्यवयंचापिवनेचराः करवामप्रियंनित्यंतन्नःपरमनुग्रहः ३७ बालावयंतुल्यब
लैःक्रीडिष्यामोयथोचितम् भवेन्नियुद्धंमाऽधर्मःस्पृशेन्मल्लसभासदः ३८ चाणूरउवाच . नबालोनकिशोरस्त्वंबलश्च
बलिनांवरः लीलयेभोहतोयेनसहस्रद्विपसत्त्वभृत् ३९ तस्माद्भवद्भ्यांबलिभिर्योद्धव्यंनानयोऽत्रवै मयिविक्रमवार्ष्णेयबलेनसह
मुष्टिकः ४० इति० भा० द० कुवलयापीडवधोनामत्रिचत्वारिंशोऽध्यायः ४३ श्रीशुक० एवंचर्चितसंकल्पोभगवान्मधुसूदनः आससा
दाथचाणूरंमुष्टिकंरोहिणीसुतः १ हस्ताभ्यांहस्तयोर्बद्ध्वापद्भ्यामेवचपादयोः विचकर्षतुरन्योन्यंप्रसह्यविजिगीषया २ अरत्नीद्वेअरत्निभ्यां
जानुभ्यांचैवजानुनी शिरःशीर्ष्णोरसोरस्तावन्योन्यमभिजघ्नतुः ३

देयुः ३५ ३६ ३७ यथोचितंनियुद्धंबाहुयुद्धंभवेत् मल्लसभासदः मल्लसभाऽधिकृतान्जनान्
अधर्मोमास्पृशेन्नस्पृशेदित्यर्थः हेमल्लेतिवा ३८ सहस्रद्विपानांसत्त्वंबलंबिभर्तीतितथा ३९ बलिभिःमादृशैःसहअनयोऽधर्मः विक्रमपराक्रमंकुरु मुष्टिकोविक्रमतादित्यनुषंगः ४०
इतिद०टी० त्रिचत्वा० ४३ चतुश्चत्वारिंशकेतुमल्लकंसादिमर्दनं कंसयोषित्समाश्वासस्ताभ्यांपित्रोश्चदर्शनं १ चर्चितःनिश्चितएवसंकल्पोयस्यसः १ २ बाहुमध्यात्कनिष्ठांगुलि
व्यतिरेकेणकृतमुष्टिर्हस्तोऽरत्निः ३

परिभ्रामणंहस्तादिषुगृहीत्वापरितश्चालनम् विक्षेपोनोदनम् परिरम्भोबाहुभ्यानिष्पीडनम् अवपातनमधःक्षेप उत्सर्पणमुत्सृज्यपुरतोगमनम् अपसर्पणपृष्ठतोगमनम् एतै प्रत्यरुन्धताप्रत्यरुन्धताम् ४ उत्थापनजानुनीपादौचपिण्डीकृत्यपतितस्योच्चाटनम् उन्नयनहस्तापर्यामुत्क्षिप्यनयनम् चालनकण्ठादिलग्नस्यनिःसारणम् स्थापनपादादिपिण्डीकरणम् एवपरस्परमात्मनोदेहस्यापचक्रतुः अपकारकृतवन्तौ ५ तद्युद्धबलाबलवत् एकतोबलमन्यतोऽबलम् तद्युद्धविषममित्यूचुरित्यर्थः यद्वातद्बलाबलवतोर्युद्धंदृष्ट्वामहानयमधर्मइत्यूचुरित्यन्वयः ६ तदेवदर्शयति महानिति बालयोर्बलवतोश्चयुद्धराजान्वेत्पश्येवस्वयंवारणीय एतेराज्ञःपश्यत स्वयमन्विच्छति अनुमन्यतइतिमहानधर्मइत्यर्थ ७ बलाबलवद्युद्धतामर्पयतिपञ्चभि क्वेति वज्रसाराणिवज्रवत्कठिनानि

परिभ्रामणविक्षेपपरिरम्भावपातनैः उत्सर्पणापसर्पणैश्चअन्योऽन्यम्प्रत्यरुन्धताम् ४ उत्थापनैरुन्नयनैश्चालनैःस्थापनैरपि परस्परंजिगीषन्तावपचक्रतुरात्मनः ५ तद्बलाबलवद्युद्धंसमेताःसर्वयोषितः ऊचुःपरस्परंराजन्सानुकम्पावरूथशः ६ महानयंबताधर्मएषांराजसभासदाम् येबलाबलवद्युद्धंराज्ञोऽन्विच्छन्तिपश्यतः ७ क्ववज्रसारसर्वाङ्गौमल्लौशैलेन्द्रसन्निभौ क्वचातिसुकुमाराङ्गौकिशोरौनाप्तयौवनौ ८ धर्मव्यतिक्रमोह्यस्यसमाजस्यध्रुवम्भवेत् यत्राधर्मःसमुत्तिष्ठेन्नस्थेयन्तत्रकर्हिचित् ९ नसभांप्रविशेत्प्राज्ञःसभ्यदोषाननुस्मरन् अब्रुवन्विब्रुवन्नज्ञोनरःकिल्बिषमश्नुते १० वल्गतःशत्रुमभितःकृष्णस्यवदनाम्बुजम् वीक्ष्यताम्श्रमवार्युप्तम्पद्मकोशमिवाम्बुभिः ११ किंनपश्यतरामस्यमुखमाताम्रलोचनम् मुष्टिकम्प्रतिसामर्षंहाससंरम्भशोभितम् १२ पुण्याबतव्रजभुवोयदयन्नृलिङ्गगूढःपुराणपुरुषोवनचित्रमाल्यः गाःपालयन्सहबलःक्वणयंश्चवेणुंविक्रीडयाञ्चतिगिरित्ररमार्चिताङ्घ्रिः १३ गोप्यस्तपःकिमचरन्यदमुष्यरूपंलावण्यसारमसमोर्ध्वमनन्यसिद्धम् दृग्भिःपिबन्त्यनुसवाभिनवन्दुरापमेकान्तधामयशसःश्रियऐश्वरस्य १४

सर्वाण्यङ्गानिययो ८ समाजस्यसभाया ९ अपराऊचुः नसभामिति अब्रुवन्ज्ञात्वाऽपितूष्णींतिष्ठन् विब्रुवन्विपरीतम्ब्रुवन् १० वल्गतइति शत्रोमभितःसर्वतोधावतःकृष्णस्यश्रमवारिणाउप्तव्याप्तंमुखाम्बुजंदृश्यताम् ११ अन्याऊचुः किंनपश्यतइति सामर्षसक्रोधम्हासेनसंरम्भआवेशस्तेनशोभितम् १२ अन्याऊचुः पुण्याबतेति नृलिङ्गेनमनुष्यदेहेनगूढः वनस्थानिचित्राणिमाल्यानियस्यसः गिरित्रःशिवःरमाचताभ्यामर्चितावङ्घ्रीयस्यसः अयम्भावः धिगिमासभायस्यामयमीदृशेपरात्परपुरुषे क्वैषव्रजभुवोधन्या यत्रायंकृष्णोविविधक्रीडयाञ्चतिगच्छतीति अहोकष्टमस्मत्पुण्याभावम् यतोऽस्माभिरनवसरेदृष्टोऽयम् १३ गोप्यस्तुबहुपुण्यवत्यइत्याहुरन्याः गोप्यइति अमुष्यश्रीकृष्णस्यरूपमङ्गलावण्येनसारम्श्रेष्ठम् किञ्च असमोर्ध्वं नविद्यतेसमम्ऊर्ध्वमधिकंचयस्यतत् तदपिनअन्येनआभरणादिनासिद्धम् किन्तुस्वतएव ऐश्वरस्यऐश्वर्यस्यचएकान्तधामअव्यभिचारिस्थानम् पाठान्तरेअमुष्यऐश्वरस्येत्यन्वयः एवम्भूतंनित्यनवीनंरूपयानेत्रैः पश्यन्तीति १४ ५ ५ ५ ५ ५ ५

किंच गोदोहनादिष्वेनंगायंतिताव्रजस्त्रियोधन्याः प्रेंखेंखनंदोलांदोलनम् उक्षणंसेचनम् कथंभूताः उरुक्रमेचित्तमुरुक्रमचित्तंतेनैवयानंसर्वविषयप्राप्तिर्यासां
ताः पाठांतरेउरुक्रमंचिंतयंत्यइत्यर्थः कुतः अनुरक्तधियः तत्रलिंगमश्रुकंठ्यः १५ प्रातरिति याअबलाअस्यवेणुंनिशम्यगृहात्तूर्णंनिर्गम्यपथिसस्मितमुख
पश्यंति ताभूरिपुण्याइति १६ एवंसभयंब्रुवाणासुस्त्रीषुतासांभयनिवृत्तयेकृष्णःशत्रुंहंतुंमनश्चक्रे १७ सभयाःस्त्रीणांगिरःश्रुत्वापुत्रयोःस्नेहेनयाशुक्
तयाआतुरौविक्लवौ पुत्रयोर्बलमजानंतौपितरावनुतापंप्रापताविति १८ १९ तदाभगवतोगात्राणामरत्निजान्वादीनांनिष्पातैः प्रहारैः वज्रस्यनिष्पेषःती

गादोहनेऽवहनने मथनोपलेपप्रेंखेंखनार्भरुदितोक्षणमार्जनादौ गायंतिचैनमनुरक्तधियोऽश्रुकंठ्योधन्याव्रजस्त्रियउरुक्रमचित्त
यानाः १५ प्रातर्व्रजाद्व्रजतआविशतश्चसायंगोभिःसमंक्वणयतोऽस्यनिशम्यवेणुम् निर्गम्यतूर्णमबलाःपथिभूरिपुण्याःपश्यंतिस
स्मितमुखंसदयावलोकम् १६ एवंप्रभाषमाणासुस्त्रीषुयोगेश्वरोहरिः शत्रुंहंतुंमनश्चक्रेभगवान्भरतर्षभ १७ सभयाःस्त्रीगिरःश्रु
त्वापुत्रस्नेहशुचातुरौ पितरावन्वतप्येतांपुत्रयोरबुधौबलम् १८ तैस्तैर्नियुद्धविधिभिर्विविधैरच्युतेतरौ युयुधातेयथान्योन्यंतथैव
बलमुष्टिकौ १९ भगवद्गात्रनिष्पातैर्वज्रनिष्पेषनिष्ठुरैः चाणूरोभज्यमानांगोमुहुर्ग्लानिमवापह २० सश्येनवेगउत्पत्यमुष्टीकृत्य
करावुभौ भगवंतंवासुदेवंक्रुद्धोवक्षस्यबाधत २१ नाचलत्तत्प्रहारेणमालाहतइवद्विपः बाह्वोर्निगृह्यचाणूरंबहुशोभ्रामयन्हरिः
२२ भूपृष्ठेपोथयामासतरसाक्षीणजीवितम् विस्रस्ताकल्पकेशस्रगिंद्रध्वजइवापतत् २३ तथैवमुष्टिकःपूर्वंस्वमुष्ट्याभिहतेनवै
बलभद्रेणबलिनातलेनाभिहतोभृशम् २४ प्रवेपितःसरुधिरमुद्वमन्मुखतोऽर्दितः व्यसुःपपातोर्व्युपस्थेवाताहतइवांघ्रिपः २५
ततःकूटमनुप्राप्तंरामःप्रहरतांवरः अवधील्लीलयाराजन्सावज्ञंवाममुष्टिना २६ तर्ह्येवहिशलःकृष्णपदापहतशीर्षकः द्विधावि
दीर्णस्तोशलकउभावपिनिपेततुः २७ चाणूरेमुष्टिकेकूटेशलेतोशलकेहते शेषाःप्रदुद्रुवुर्मल्लाःसर्वेप्राणपरीप्सवः २८ गोपान्वय
स्यानाकृष्यतैःसंसृज्यविजह्रतुः वाद्यमानेषुतूर्येषुवल्गंतौभूतनूपुरौ २९ जनाःप्रजहृषुःसर्वेकर्मणारामकृष्णयोः ऋतेकंसंविप्र
मुख्याःसाधवःसाधुसाध्विति ३० हतेषुमल्लवर्येषुविद्रुतेषुचभोजराट् न्यवारयत्स्वतूर्याणिवाक्यंचेदमुवाचह ३१ निःसारयतदुर्वृ
त्तौवसुदेवात्मजौपुरात् धनंहरतगोपानांनंदंबध्नीतदुर्मतिम् ३२

अप्रतीर्पैःतद्वन्निष्ठुरैः भज्यमानांगः श्लथगात्रइत्यर्थः २० श्येनस्येववे
गोयस्यसः चाणूरः अबाधतअताडयत् २१ २२ भूपृष्ठेभुवउपरिपोथयामास आस्फालयत् इंद्रध्वजोवज्रम् यद्वा इंद्रध्वजोगौडेषुप्रसिद्धः कस्मिंश्चिदुत्स
वेमहान्स्तंभोध्वजपताकाद्यलंकृतःपुरुषाकृतिः उच्छ्रीयते सयथापततितद्वदपतदिति २३ २४ अर्दितःपीडितः उर्व्युपस्थेभूतले २५ २६ २७ २८
वल्गंतौनृत्यादिकुर्वंतौ २९ साधुसाधुइतिवदंतः ३० ३१ ३२

परिभ्रामणंदक्षादिधृगृहीत्वापरितभ्रामणम् विक्षेपोनोदनम् परिरंभोबाहुभ्यानिष्पीडनम् अवपातनमध क्षेप उत्सर्पणमुत्सृज्यपुनरतोगमनम् अपसर्पणपृष्ठ तोगमनम् एतैः प्रत्यरुधतामस्पर्शववतो ४ उत्थापनजानुनीपादेनपिडोद्धृत्यपतितस्योच्चाटनम् ७ नयनहस्ताभ्यामुद्धृत्यनयनम् चालनकण्ठादिलग्नस्यनिःसा रणम् स्थापनपादादिपिडीकरणम् एवंपरस्परमात्मनोदेहस्यापचक्रतुः अपकारकृतवंतौ ५ तद्युद्धंबलाबलवत् एकतोबलमन्यतोऽबलम् तद्युद्धविषममित्यु चुरित्यर्थः यदातद्बलाबलवतोर्युद्धंदृष्ट्वामहानयमधर्मइत्यूचुरित्यन्वयः ६ तदेवदर्शयति महानिति बालयोर्बलवतोश्चयुद्धंराजान्वितप्रश्येववस्वयंवारणी य एतेराज्ञ पश्यत स्वयमन्विच्छंति अनुमन्यतइतिमहानधर्मइत्यर्थः ७ बलाबलवद्युद्धंतांप्रपंचयतिपंचाभिः क्वेति वज्रसाराणिवज्रवत्कठिनानि

परिभ्रामणविक्षेपपरिरंभावपातनैः उत्सर्पणापसर्पणैश्चअन्योऽन्यंप्रत्यरुंधताम् ४ उत्थापनैरुन्नयनैश्चालनैःस्थापनैरपि परस्परं जिगीषंतावपचक्रतुरात्मनः ५ तद्बलाबलवद्युद्धंसमेताः सर्वयोषितः ऊचुः परस्परंराजन्सानुकंपावरूथशः ६ महानयंबताधर्मएषांरा जसभासदाम् येबलाबलवद्युद्धंराज्ञोऽन्विच्छंतिपश्यतः ७ क्ववज्रसारसर्वांगौमल्लौशैलेंद्रसन्निभौ क्वचातिसुकुमारांगौकिशोरौ नाप्तयौवनौ ८ धर्मव्यतिक्रमोह्यस्यसमाजस्यध्रुवंभवेत् यत्राधर्मःसमुत्तिष्ठेन्नस्थेयंतत्रकर्हिचित् ९ नसभांप्रविशेत्प्राज्ञःस भ्यदोषाननुस्मरन् अब्रुवन्विब्रुवन्नज्ञोनरःकिल्बिषमश्नुते १० वल्गतःशत्रुमभितःकृष्णस्यवदनांबुजम् वीक्ष्यतांश्रमवार्युप्तं पद्मकोशमिवांबुभिः ११ किंनपश्यतरामस्यमुखमाताम्रलोचनम् मुष्टिकंप्रतिसामर्षंहाससंरंभशोभितम् १२ पुण्याबतव्रजभु वोयदयंनृलिंगगूढःपुराणपुरुषोवनचित्रमाल्यः गाःपालयन्सहबलःक्वणयंश्चवेणुंविक्रीडयाचतिगिरित्ररमार्चितांघ्रिः १३ गोप्यस्तपःकिमचरन्यदमुष्यरूपंलावण्यसारमसमोर्ध्वमनन्यसिद्धम् दृग्भिःपिबंत्यनुसवाभिनवंदुरापमेकांतधामयशसःश्रि यऐश्वरस्य १४

सर्वाण्यंगानिययोः ८ समाजस्यसभायाः ९ अपराऊचुः नसभामिति अब्रुवन्ज्ञात्वाऽपितूष्णींतिष्ठन् विब्रुवन्विपरी तंब्रुवन् १० वल्गत शत्रुमभितइति शश्रोः सर्वतोधावतःकृष्णस्यश्रमवारिणाऽऽप्तंव्याप्तंमुखांबुजंदृश्यताम् ११ अन्याऊचुः किंनपश्यतइति साम र्षंसक्रोधम् हासेनसंरंभआवेशस्तेनशोभितम् १२ अन्याऊचुः पुण्याबतेति नृलिंगेनमनुष्यदेहेनगूढः वनस्थानिचित्राणिमाल्यानियस्यसः गिरित्रःशिव रमाचताभ्यामर्चितावंघ्रीयस्यसः अयभावः येगिरिशादिभिरप्यस्यामयपराभूयते तास्तुव्रजभुवोधन्याः यत्तासुअयंकृष्णोविविधक्रीडयाञ्चतिगच्छतीति अहोकृष्ण स्यपुण्यवत्त्वम् यतोऽस्माभिरनवसरेदृष्टोऽयम् १३ गोप्यस्तुबहुपुण्याइत्याहुरन्याभिः गोप्यइति अमुष्यश्रीकृष्णस्यरूपमंगलावण्येनसारंश्रेष्ठम् किंच असमोर्ध्वं नविद्यतेसमऊर्ध्वमधिकंचयस्यतत् तदपिनअन्येनआभरणादिनासिद्धम् किंतुस्वतएव ऐश्वरस्यऐश्वर्यस्यच एकांतधामअव्यभिचारिस्थानम् पाठांतरेअमुष्यईश्वर स्येत्यन्वयः एवंभूतनित्यनवीनरूपयानेत्रैःपश्यतीति १४ ५ ५ ५ ५ ५ ५

किंच यादोहनादिषेनंगायंतिताव्रजस्त्रियोधन्याः प्रेंखेंखनंदोलांदोलनम् उक्षणंसेचनम् कथंभूताः उरुक्रमेचित्तमुरुक्रमचित्तंतेनैवयानंसर्वविषयप्राप्तिर्यासां
ताः पाठांतरेउरुक्रमंचिंतयंत्यइत्यर्थः कुतः अनुरक्तधियः तत्रलिंगमश्रुकंठ्यः १५ प्रातरिति याअबलाअस्यवेणुंनिशम्यगृहात्तूर्णंनिर्गम्यपथिसस्मितमुख
पश्यंति ताभूरिपुण्याइति १६ एवंसभयंब्रुवाणासुस्त्रीषुतासांभयनिवृत्तयेकृष्णः शत्रुंहंतुंमनश्चक्रे १७ सभयाः स्त्रीणांगिरः श्रुत्वापुत्रयोः स्नेहेनयाशुक्
तयाआतुरौविह्वलौ पुत्रयोर्बलमजानंतौपितरावनुतापंप्रापताविति १८ १९ तदाभगवतोगात्राणामरत्निजान्वादीनांनिष्पातैः प्रहारैः वज्रस्यनिष्पेषः ती

यादोहनेऽवहननेमथनोपलेपप्रेंखेंखनार्भरुदितोक्षणमार्जनादौ गायंतिचैनमनुरक्तधियोऽश्रुकंठ्योधन्याव्रजस्त्रियउरुक्रमचित्त
याना: १५ प्रातर्व्रजाद्व्रजतआविशतश्चसायंगोभिःसमंक्वणयतोऽस्यनिशम्यवेणुम् निर्गम्यतूर्णमबलाःपथिभूरिपुण्याःपश्यंतिस
स्मितमुखंसदयावलोकम् १६ एवंप्रभाषमाणासुस्त्रीषुयोगेश्वरोहरिः शत्रुंहंतुंमनश्चक्रेभगवान्भरतर्षभ १७ सभयाःस्त्रीगिरःश्रु
त्वापुत्रस्नेहशुचातुरौ पितरावन्वतप्येतांपुत्रयोरबुधौबलम् १८ तैस्तैर्नियुद्धविधिभिर्विविधैरच्युतेतरौ युयुधातेयथान्यायंतथै
वबलमुष्टिकौ १९ भगवद्गात्रनिष्पातैर्वज्रनिष्पेषनिष्ठुरैः चाणूरोभज्यमानांगोमुहुर्ग्लानिमवाप ह २० सश्येनवेगउत्पत्यमुष्टीकृत्य
करावुभौ भगवंतंवासुदेवंक्रुद्धोवक्षस्यबाधत २१ नाचलत्तत्प्रहारेणमालाहतइवद्विपः बाह्वोर्निगृह्यचाणूरंबहुशोभ्रामयन्हरिः
२२ भूपृष्ठेपोथयामासतरसाक्षीणजीवितम् विस्रस्ताकल्पकेशस्रगिंद्रध्वजइवापतत् २३ तथैवमुष्टिकःपूर्वंस्वमुष्ट्याभिहतेनवै
बलभद्रेणबलिनातलेनाभिहतोभृशम् २४ प्रवेपितःसरुधिरमुद्वमन्मुखतोऽर्दितः व्यसुःपपातोर्व्युपस्थेवाताहतइवांघ्रिपः २५
ततःकूटमनुप्राप्तंरामःप्रहरतांवरः अवधील्लीलयाराजन्सावज्ञंवाममुष्टिना २६ तर्ह्येवहिशलःकृष्णपदापहतशीर्षकः द्विधावि
दीर्णस्तोशलकउभावपिनिपेततुः २७ चाणूरेमुष्टिकेकूटेशलेतोशलकेहते शेषाःप्रदुद्रुवुर्मल्लाःसर्वेप्राणपरीप्सवः २८ गोपान्वय
स्यानाकृष्यतैःसंसृज्यविजह्रतुः वाद्यमानेषुतूर्येषुवल्गंतौरुतनूपुरौ २९ जनाःप्रजहृषुःसर्वेकर्मणारामकृष्णयोः ऋतेकंसंविप्र
मुख्याःसाधवःसाधुसाध्विति ३० हतेषुमल्लवर्येषुविद्रुतेषुचभोजराट् न्यवारयत्स्वतूर्याणिवाक्यंचेदमुवाच ह ३१ निःसारयतदुर्वृ
त्तौवसुदेवात्मजौपुरात् धनंहरतगोपानांनंदंबध्नीतदुर्मतिम् ३२

भगवद्गात्रनिष्पातैः तद्वन्निष्ठुरैः भज्यमानांगः श्लथगात्रइत्यर्थः २० श्येनस्येववे
गोयस्यसः चाणूरः अबाधतअताडयत् २१ २२ भूपृष्ठेभुवउपरिपोथयामास आस्फालयत् इंद्रध्वजोवज्रम् यद्वा इंद्रध्वजोगौडेषुप्रसिद्धः कस्मिंश्चिदुत्स
वेमहान्स्तंभोध्वजपताकाद्यलंकृतःपुरुषाकृतिः उच्छ्रीयते सयथापततितद्वदपतदिति २३ २४ अर्दितःपीडितः उर्व्युपस्थेभूतले २५ २६ २७ २८
वल्गंतौनृत्यादिकुर्वंतौ २९ साधुसाध्विति वदंतः ३० ३१ ३२ ६५ ६५ ६५ ६५ ६५ ६५

स्तु अव्ययः अभग्नः लघिम्ना लाघवेन ३४ ३५ दुर्विषहमसह्यमुग्रंतेजोयस्य सः श्रीकृष्णः ३६ गरिष्ठत्वात् विश्वाश्रयत्वमुक्तम् तत्रहेतुः अब्जनाभः कुक्षौ तस्योपर्येव पपात यतः आत्मतंत्रः स्वतंत्रः ३७ ३८ ३९ निर्वेशोनिष्कृतिरानृण्यमित्यर्थः तत्कारिणः संतः तेऽभ्यधावन् ४० तथातादृक् अतिरभसोवेगोयेषांतान् संय तान्उद्युक्तान् ४१ ४२ ४३ शोचत्योविलापंचक्रुः शुचः अश्रूणि ४४ धर्मज्ञइत्यादीनिविलापेसंबोधनानि तेत्वदीयावयम् ४५ त्वयापत्याविरहिता

वसुदेवस्तुदुर्मेधा हन्यतामाश्वसत्तमः उग्रसेनःपिताचापिसानुगःपरपक्षगः ३३ एवंविकत्थमानेवैकंसेप्रकुपितोऽव्ययः लघिम्नो त्पत्यतरसामंचमुत्तुंगमारुहत् ३४ तमाविशंतमालोक्यमृत्युमात्मनआसनात् मनस्वीसहसोत्थायजगृहेसोऽसिचर्मणी ३५ तंख ड्गपाणिंविचरंतमाशुश्येनंयथादक्षिणसव्यमंबरे समग्रहीद्दुर्विषहोग्रतेजायथोरगंतार्क्ष्यसुतःप्रसह्य ३६ प्रगृह्यकेशेषुचलत्किरीटं निपात्यरंगोपरितुंगमंचात् तस्योपरिष्टात्स्वयमब्जनाभःपपातविश्वाश्रयआत्मतंत्रः ३७ तंसंपरेतंविचकर्षभूमौहरिर्यथेभंजगतोविप श्यतः हाहेतिशब्दःसुमहांस्तदाऽभूदुदीरितःसर्वजनैर्नरेंद्र ३८ सनित्यदोद्विग्नधियातमीश्वरंपिबन्वदन्वाविचरन्स्वपन्श्वसन् ददर्शचक्रायुधमग्रतोयतस्तदेवरूपंदुरवापमाप ३९ तस्यानुजाभ्रातरोऽष्टौकंकन्यग्रोधकादयः अभ्यधावन्नभिक्रुद्धाभ्रातुर्निर्वेशका रिणः ४० तथाऽतिरभसांस्तांस्तुसंयत्तान्रोहिणीसुतः अहन्परिघमुद्यम्यपशूनिवमृगाधिपः ४१ नेदुर्दुंदुभयोव्योम्निब्रह्मेशाद्याविभू तयः पुष्पैःकिरंतस्तंप्रीताःशशंसुर्ननृतुःस्त्रियः ४२ तेषांस्त्रियोमहाराजसुहृन्मरणदुःखिताः तत्राभीयुर्विनिघ्नंत्यःशीर्षाण्यश्रुविलो चनाः ४३ शयानान्वीरशय्यायांपतीनालिंग्यशोचतीः विलेपुःसुस्वरंनार्योविसृजंत्योमुहुःशुचः ४४ हानाथप्रियधर्मज्ञकरुणा नाथवत्सल त्वयाहतेननिहतावयंतेसगृहप्रजाः ४५ त्वयाविरहितापत्यापुरीयंपुरुषर्षभ नशोभतेवयमिवनिवृत्तोत्सवमंगला ४६ अनागसांत्वंभूतानांकृतवान्द्रोहमुल्बणम् तेनेमांभोदशांनीतोभूतध्रुक्कोलभेतशम् ४७ सर्वेषामिहभूतानामेषहिप्रभवा प्ययः गोप्ताचतदवध्यायीनक्वचित्सुखमेधते ४८ श्रीशुकउवाच राजयोषितआश्वास्यभगवाँल्लोकभावनः यामा हुर्लौकिकींसंस्थांहतानांसमकारयत् ४९ मातरंपितरंचैवमोचयित्वाऽथबंधनात् कृष्णरामौववंदातेशिरसास्पृश्यपादयोः ५० दे वकीवसुदेवश्चविज्ञायजगदीश्वरौ कृतसंवंदनौपुत्रौसस्वजातेनशंकितौ ५१ इतिश्रीभाग०म०द०कंसवधोनामचतुश्चत्वारिंशोऽ ध्यायः ४४

पुरीयंनशोभतइति स्वरूपाभिधानम् ४६ अनागसामितितुपरमार्थाभिधानम् ४७ एषकृष्णः प्रभवत्यस्मादितिप्रभवः अपियत्यस्मिन्निति अप्ययः संश्चसन् तदवध्यानमवज्ञा तत्कर्तुंशीलंयस्यसः ४८ ४९ आस्पृश्यईषत्स्पृष्ट्वा ५० पुत्रावपिविहायजगदीश्वराविति ज्ञात्वाशंकितौ नसस्वजाते नआ लिंगितवंतौ किंतुसद्राजवत्तस्थतुरित्यर्थः प्रसह्यहत्वाहस्तींद्रमल्लदानमल्ललीलया कंसान्सचरितःकंससंबोधसंगमारयत् ५१ इतिदशमेटीकायांचतुश्चत्वारिं शोऽध्यायः ४४

पंचचत्वारिंशके ऽथ पितृनन्दादिसान्त्वनम् उग्रसेनाभिषेकश्च गुरौ वासात्पुरागमः १ उपलब्धार्थौ विदित्वेति अयमर्थः उपसमीपे आवयोः पुत्रबुद्ध्या सांसारिकपरमसुखभोगात्पूर्वमेव लब्धार्थौ आवामीश्वराविति लब्धः प्राप्तः परमज्ञानरूपोऽर्थो याभ्यां तौ यथाभूतौ ज्ञात्वा मयि प्रसन्ने सति अनयोर्ज्ञानं नाम किं दुर्लभं स्यात् दुर्लभं तु मयि पुत्रतया प्रेम अत इदानीमेव तज्ज्ञानं माभूदिति निजां स्वाधीनां मायां तयोः प्रसारितवानिति १ तदेव दर्शयति उवाचेत्यादिरष्टभिः प्रीणयन् सादरं ब्रुवन् २ अस्मत्तः अस्मन्निमित्तं नित्यमुत्कण्ठितयोरपि युवयोः पुत्राभ्यामावाभ्यां कृत्वा बाल्यपौगण्डकैशोराः तत्तदवस्थाऽनुभवसुखानीत्यर्थः नाभवन्निति अस्मत्तः पुत्राभ्यामिति सामानाधिकरण्यं वा ३ किंच आवामेव दैवहीनावित्याह नलब्ध इति पितृगेहस्था बाला यां मुदं विंदन्ते सा च न लब्धेति ४ एवं तावत् श्लोकद्वयेन युवयो

श्रीशुक उवाच पितरावुपलब्धार्थौ विदित्वा पुरुषोत्तमः माभूदिति निजां मायां ततान जनमोहिनीम् १ उवाच पितरावेत्य साग्रजः सात्वतर्षभः प्रश्रयावनतः प्रीणन्नंब तातेति सादरम् २ नास्मत्तो युवयोस्तात नित्योत्कण्ठितयोरपि बाल्यपौगण्डकैशोराः पुत्राभ्यामभवन् क्वचित् ३ न लब्धो दैवहतयोर्वासो नौ भवदंतिके यां बालाः पितृगेहस्था विंदते लालिता मुदम् ४ सर्वार्थसंभवो देहो जनितः पोषितो यतः न तयोर्याति निर्वेशं पित्रोर्मर्त्यः शतायुषा ५ यस्तयोरात्मजः कल्प आत्मना च धनेन च वृत्तिं न दद्यात्तं प्रेत्य स्वमांसं खादयंति हि ६ मातरं पितरं वृद्धं भार्यां साध्वीं सुतं शिशुम् गुरुं विप्रं प्रपन्नं च कल्पोऽबिभ्रत् श्वसन्मृतः ७ तन्नावकल्पयोः कंसान्नित्यमुद्विग्नचेतसोः मोघमेते व्यतिक्रांता दिवसा वामनर्चतोः ८ तत्क्षंतुमर्हथस्तात मातर्नौ परतंत्रयोः अकुर्वतोर्वां शुश्रूषां क्लिष्टयोर्दुर्हृदा भृशम् ९ श्रीशुक उवाच इति मायामनुष्यस्य हरेर्विश्वात्मनो गिरा मोहितावंकमारोप्य परिष्वज्यापतुर्मुदम् १० सिंचंतावश्रुधाराभिः स्नेहपाशेन चावृतौ न किंचिदूचतू राजन् बाष्पकण्ठौ विमोहितौ ११ एवमाश्वास्य पितरौ भगवान् देवकीसुतः मातामहं तूग्रसेनं यदूनामकरोन्नृपम् १२ आह चास्मान्महाराज प्रजाश्चाज्ञप्तुमर्हसि ययातिशापाद्यदुभिर्नासितव्यं नृपासने १३ मयि भृत्य उपासीने भवतो विबुधादयः बलिं हरंत्यवनताः किमुतान्ये नराधिपाः १४ सर्वान्स्वान् ज्ञातिसंबंधान् दिग्भ्यः कंसभयाकुलान् यदुवृष्ण्यंधकमधुदाशार्हकुकुरादिकान् १५

रवयोश्च कामहानिर्जातेत्युक्तम् आवयोः पुनर्युष्मत्परिचर्यालोपेन धर्महानिरपि जातेत्याह सर्वार्थसंभव इति सर्वेषां धर्माद्यर्थानां संभवो यस्मिन् स देहो यतः याभ्यां जनितः पोषितश्च तयोः पित्रोर्निर्वेशं निष्कृतिमानृण्यं मर्त्यः शतसंवत्सरमात्रेणायुषा न प्राप्नोति ५ तन्नाध्येपि तु यः पुत्रः कल्पः समर्थः सन्नपि देहेन धनेन च पित्रोर्वृत्तिं जीविकां न संपादयेत् तं प्रेत्य लोकांतरे यमदूताः स्वस्यैव मांसं खादयंतीति ६ किंच मात्रादिशुश्रूषामकुर्वन् विफलजीवितश्च भवतीत्याह मातरमिति अबिभ्रत् अपुष्णन् श्वसन्नपि मृततुल्य एवेति ७ तत्तस्मात् नौ आवयोः मोघं व्यर्थं मनर्चतोः अपूजयतोः ८ दुर्हृदा कंसेन कृत्वा ९ १० ११ आश्वास्य सांत्वयित्वा १२ त्वमेवाज्ञापयेति मा वदेत्याह ययातिशापादिति तव तु यादवत्वेऽपि मदाज्ञया न दोष इति भावः १३ मम तादृशी शक्तिर्नास्तीति चेत्तत्राह मयीति मत्प्रसादेन सर्वं भविष्यतीत्यर्थः १४ स्वान् ज्ञातीन् संबंधांश्च दिग्भ्य आनाय्येति १५

१८ सिद्धाः पूर्णाः कृष्णरामाभ्यांगतोनिवृत्तोज्वरस्तापोयेषांते १७ सदयस्मितवीक्षणंयस्मिंस्तत् १८ प्रवयसोवृद्धाअपिप्रभतिशयितबलमोजश्चयेषांते १९
२० भृशमात्मनोऽप्यधिकेनपोषितौनचाम्भर्ययेनतत् इत्याह पित्रोरिति आत्मनोदेहादप्यात्मजेष्वभ्यधिकाहिप्रीतिरिति २१ देवकीवसुदेवयोः पुत्रौपुष्णीतांस्म
तुम्नावित्यपिनवाच्यमित्याह सपितेति २२ २३ सव्रजंव्रजवासिभिः सहितम् कुप्यानिस्वर्णरजताद्व्यतिरिक्तकांस्यपात्रादीनितत्प्रभृतिभिः २४ २५ पु

सभाजितान्समाश्वास्यविदेशावासकर्शितान् न्यवासयत्स्वगृहेषुवित्तैसतर्प्यविश्वकृत् १६ कृष्णसंकर्षणभुजैर्गुप्तालब्धमनोरथाः
गृहेषुरेमिरेसिद्धा कृष्णरामगतज्वराः १७ वीक्षन्तोऽहरहः प्रीतामुकुन्दवदनाम्बुजम् नित्यप्रमुदितश्रीमत्सदयस्मितवीक्षणम् १८
तत्रप्रवयसोप्यासन्युवानोऽतिबलौजसः पिबन्तोऽक्षैर्मुकुन्दस्यमुखाम्बुजसुधांमुहुः १९ अथनन्दंसमासाद्यभगवान्देवकीसुतः सं
कर्षणश्चराजेन्द्रपरिष्वज्येदमूचतुः २० पितर्युवाभ्यांस्निग्धाभ्यांपोषितौलालितौभृशम् पित्रोरभ्यधिकाप्रीतिरात्मजेष्वात्मनोऽपि
हि २१ सपितासाचजननीयौपुष्णीतांस्वपुत्रवत् शिशून्बन्धुभिरुत्सृष्टानकल्पैःपोषरक्षणे २२ यातयूयंव्रजंतातवयंचस्नेहदुःखि
तान् ज्ञातीन्वोद्रष्टुमेष्यामोविधायसुहृदांसुखम् २३ एवंसान्त्वय्यभगवान्नन्दंसव्रजमच्युतः वासोऽलंकारकुप्याद्यैरर्हयामाससा
दरम् २४ इत्युक्तस्तौपरिष्वज्यनन्दःप्रणयविह्वलः पूरयन्नश्रुभिर्नेत्रेसहगोपैर्व्रजंययौ २५ अथशूरसुतोराजन्पुत्रयोःसमका
रयत् पुरोधसाब्राह्मणैश्चयथावद्द्विजसंस्कृतिम् २६ तेभ्योऽदाद्दक्षिणागावोरुक्ममाल्याःस्वलंकृताः स्वलंकृतेभ्यःसंपूज्य
सवत्साःक्षौममालिनीः २७ याःकृष्णरामजन्मर्क्षेमनोदत्तामहामतिः ताश्चाददादनुस्मृत्यकंसेनाधर्मतोहृताः २८ ततश्च
लब्धसंस्कारौद्विजत्वंप्राप्यसुव्रतौ गर्गाद्यदुकुलाचार्याद्गायत्रंव्रतमास्थितौ २९ प्रभवौसर्वविद्यानांसर्वज्ञौजगदीश्वरौ ना
न्यसिद्धामलज्ञानंगूहमानौनरेहितैः ३० अथोगुरुकुलेवासमिच्छन्तावुपजग्मतुः काश्यंसांदीपनिंनामह्यवन्तिपुरवासिनम्
३१ यथोपसाद्यतौदान्तौगुरौवृत्तिमनिन्दिताम् ग्राहयन्तावुपेतौस्मभक्त्यादेवमिवादृतौ ३२ तयोर्द्विजवरस्तुष्टः शुद्धभावा
नुवृत्तिभिः प्रोवाचवेदानखिलान्सांगोपनिषदोगुरुः ३३ सरहस्यंधनुर्वेदंधर्मान्न्यायपथांस्तथा तथाचान्वीक्षिकींवि
द्यांराजनीतिंचषड्विधाम् ३४

रोधसागर्गाचार्येणद्विजसंस्कृतिमुपनयनम् २६ गावोगाः रुक्मस्यमालाविद्यतेयासांताः क्षौमवस्त्रमालावती
२७ याः पूर्वमनोदत्ता आसन्ताअपवाददान्ननुताः कंसेनापहृताः सत्यम् राजगोष्ठाद्याच्छिद्यदत्ताइत्याह कंसेनाधर्मतइति २८ गायत्रंव्रतंब्रह्मचर्यम् २९ प्रकर्षेण
भवत्याभ्यामितिप्रभवौअतएवसर्वज्ञौ स्वतःसिद्धममलज्ञानंप्रच्छादयन्तौनरचेष्टितैः ३० ३१ यथायथावत्उपसाद्यप्राप्यगुरौवृत्तिमन्यान्ग्राहयन्तौशिक्षयन्तौगुरुमु
पेतौउपगतौसेवितवन्तावित्यर्थः ३२ शुद्धोभावोयासुताभिरनुवृत्तिभिः सांगोपनिषदः अंगानिशिक्षादीनितैरुपनिषद्भिश्चसहितान् ३३ सरहस्यंमन्त्रदेवताज्ञान
सहितम् धर्मान्मन्वादिधर्मशास्त्राणि न्यायपथान्मीमांसादीन् आन्वीक्षिकींतर्कविद्याम् षड्विधांसंधिविग्रहयानासनद्वैधाश्रयइति एवंषड्विधांराजनीतिम्

